भास्कररायकृत गुप्तवती पाठानुसारेण

# दुर्गासप्तशती

(बीजमन्त्रात्मक दुर्गासप्तशती संवलिता)

दशाङ्ग पाठः

## भास्करराय–कृत गुप्तवती पाठानुसारेण

# दुर्गासप्तशती

## (बीजमंत्रात्मक दुर्गासप्तशती संवलिता)

*Compiled by :* **Dr. Ketu Ramachandrasekhar**

**GIRI**

**GIRI TRADING AGENCY PRIVATE LIMITED**

# DURGA SAPTASHATI

(Sanskrit - Bold Print)

ISBN : 978-81-7950-689-9

1st Edition : October 2015 | 1st Reprint : August 2018 | Pages 512 | Demy 1/8 Hard Bound | Maplitho | 1000 Copies

Published by : GIRI TRADING AGENCY PRIVATE LIMITED 

*Regd. Office* : Modi Niwas, Opp.Post Office, Matunga, Mumbai - 19. ✆ (022) 2412 1344

*Admn. Office* : No.372/1, Mangadu Pattur Koot Road, Mangadu, Chennai - 600 122.
✆ +91 44 66 93 93 93 (Multiple Lines), +91 44 2679 3190, 3100

www.giri.in ✉ sales@giri.in

SHOWROOMS : MUMBAI - CHENNAI - KANCHIPURAM - COIMBATORE - MADURAI - TRICHY - SALEM - PONDICHERRY - SECUNDERABAD - BANGALORE - NEW DELHI

# PREFACE

We are pleased to present to the world of upasakas this second and enlarged edition of Durga Saptashati. This edition faithfully adheres to the text and reading adopted by Sri Bhaskararaya in his Guptavati commentary of Saptashati. Sri Bhaskararaya takes Katyayani Tantra as a scriptural authority in dealing with the reading and ennumeration of the verses (full and half). The Guptavati commentary & Katyayani Tantra's rendition was published in 'Durgopasana Kalpadruma' long ago from Bombay. Since the text is not easily available we are pleased to present their reading to the upasakas. Bhaskararaya has applied rules of 'Purva Mimamsa' in arriving at the correct reading.

This edition also carries the three Nama Suktas i.e. Kali, Lakshmi and Sarasvati Suktas in addition to the names of 64 yoginis whose chanting is endorsed by Haragauri Tantra. Also Bija Mantratmaka Saptashati is added in this edition.

Again a special Sankalpa too is another gem studded in this edition. Close scrutiny will show us the ennumeration of all the benefits acquired by the chanting of this 'Saptashati' enlisted in the words of Devi herself enlisted in the sankalpa.

Addition of 360 names of Chandika culled out from 'Saptashati' itself would prove useful for the sadhakas in contemplation of the deeds of Chandika as described in Saptashati while chanting these 360 names.

May Chandika Parameshwari be pleased with these efforts and be a source of comfort for all.

'करोतु सा नः शुभहेतुरीश्वरी'

**Dr. Kethu Ramachandrasekhar**

# CONTENTS

# श्री दुर्गासप्तशती

## सप्तशतीपाठविधिः

### आचमनम्

ओं ऐं आत्मतत्त्वं शोधयामि नमःस्वाहा ।

ओं ह्रीं विद्यातत्त्वं शोधयामि नमःस्वाहा ।

ओं क्लीं शिवतत्त्वं शोधयामि नमःस्वाहा ।

ओं ऐं ह्रीं क्लीं सर्वतत्त्वं शोधयामि नमःस्वाहा ।।

# गणपति ध्यानम्

शुक्लांबरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्व–विघ्नोपशान्तये ।।

## प्राणायामं

ततः पवित्रपाणिः प्राणायामं कुर्यात् ।।
यथा मूलमंत्रेणेडया (वामनासया) वायुमापूर्य कुंभके चतुर्वारं मूलं पठित्वा द्विवारं मूलमुच्चरन् पिंगलया(दक्षनासया) रेचयेत् इति ।।

# नित्यपाठसंकल्पः

।। शुभे, शोभने, मुहूर्ते, आद्यब्रह्मणः द्वितीयपरार्धे, श्वेतवराहकल्पे वैवस्वतमन्वन्तरे, अष्टाविंशति–तमे कलियुगे प्रथमे–पादे, जंबूद्वीपे, भारतवर्षे, भरत–खण्डे, मेरोर्दक्षिणे पार्श्वे, शकाब्दे अस्मिन् वर्तमाने व्यावहारिके प्रभवादि षष्टिसंवत्सराणांमध्ये* .... नामसंवत्सरे* .... अयने* ....ऋतौ* ....मासे* ....पक्षे* ... शुभतिथौ* .... वासरयुक्तायां* .....नक्षत्रयुक्तायां शुभयोग शुभकरण सकलविशेषण विशिष्टायां अस्यां–शुभतिथौ ममोपात्त–समस्त–

*....see panchanga

दुरितक्षयद्वारा श्री महाकाली, महालक्ष्मी, महासरस्वती प्रीत्यर्थं अस्माकं सर्वेषां सकुटुम्बानां क्षेमस्थैर्य–धैर्य–वीर्य–विजय–आयुरारोग्य–ऐश्वर्याभिवृद्ध्यर्थं समस्त–मंगलावाप्त्यर्थं समस्तदुरितोपशान्त्यर्थं, चण्डिका प्रसादसिध्यर्थं कवचार्गला–कीलकपठनैकादशन्यासपूर्वकं देवीसूक्तपठन–नवार्णमंत्राष्टोत्तरशतजपरहस्यत्रयपठनांतं श्रीचंडीसप्तशत्याः पाठंकरिष्ये। पारायणाङ्गत्वेन यावच्छक्ति ध्यानावाहनादि–षोडशोपचार–पूजां करिष्ये ।।

## सङ्कल्पे विशेषः

सहस्र–फणामणि–मण्डल–मण्डितस्य शेष–पर्यङ्क–शयानस्य भगवतः श्रीमन्नारायणस्य सृष्ट्यादौ नाभि कमलादाविर्भूतस्य ब्रह्मणः

संरक्षणार्थं विष्णुकर्णमलोद्भूतयोः मधुकैटभयोः निग्रहार्थं ब्रह्मणा संप्रार्थितायाः विष्णोः नेत्र–आस्य–नासिका–बाहु– हृदयेभ्यः उरसश्च आविर्भूतायाः दशवक्त्रायाः दशभुजायाः दशपादायाः नीलमणिद्युतेः रूपसौभाग्यकान्तीनां परम प्रतिष्ठायाः श्रीमहाकाल्याः – ससैन्यसहित महिषासुर निग्रहार्थं सर्वदेव–शरीरेभ्यो ज्योतिरूपेण आविर्भूतायाः अष्टादशभुजायाः प्रवालवर्णायाः कमलासनस्थायाः त्रिगुणात्मिकायाः महिषमर्दिन्याः श्रीमहालक्ष्म्याः – ससैन्यसहित–शुम्भ निशुम्भ–धूम्रलोचन–चण्ड–मुण्ड–रक्तबीजादि निग्रहार्थं गौरी देहात् समुद्भूतायाः ब्राह्म्यादि शक्ति सहितायाः स्फटिकवर्णायाः अष्टभुजायाः सर्वज्ञत्वप्रदायाः श्रीमहासरस्वत्याः लोक–संरक्षणार्थं नन्दा–

रक्तदन्तिका–शाकम्भरी–भीमा–दुर्गा–भ्रामरी–रूपेण कृतावताराया:
एतासां समष्टिरूपेण विशजन्त्या: श्रीचण्डिकापरमेश्वर्या:
यश्चाभिस्स्तवैश्च मां नित्यं स्तोष्यते य: मानव: तस्याहं सकलां बाधां
शम्यिष्याम्यसंशयं इति श्रीदेव्योक्त प्राकारेण स्तोतॄणां सकलबाधा
निवृत्तिप्रदाया: यत्रैतत्पठ्यते सम्यक् नित्यमायतने मम सदा न तत्
विमोक्ष्यामि सान्निध्यं तत्र मे स्थितं च सर्वं ममैतन्माहात्म्यं मम
सन्निधिकारणं च इति श्रीदेव्योक्त प्राकारेण उपासकानां गेहे नित्यं
सन्निहिताया: श्रुतं हरति पापानि तथारोग्यं प्रयच्छति इति श्रीदेव्योक्त
प्राकारेण सकृत् श्रवणादेव सकल पापहरपूर्वक सकल आरोग्य प्रदाया:
सर्वाबाधासु घोरासु वेदनाभ्यर्दितोऽपि वास्मरन् ममैतच्चरितं नरो मुच्येत

सङ्कटात् इति श्रीदेव्या दत्त वरप्रदाने स्मरणादेव सकल शत्रुबाधा निवृत्तिप्रदायाः श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः इति श्रीदेव्योक्तरीत्या सर्वसम्पत्प्रद–विचित्र–पवित्र–चरित्र–वैभवायाः उपसर्गानशेषांस्तु महामारीसमुद्भवान् तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम इति श्रीदेव्योक्त प्राकारेण महामार्यादि रोगाणां स्मरणादेव शान्तिप्रदायाः परदेवतायाः श्रीजगन्मातुः प्रसादसिद्ध्यर्थं श्री जगन्मातुः प्रसादात् आसेतुहिमाचल निवसतां आस्तिक महाजनानां आबाल–वृद्धानां द्विपदां चतुष्पदां क्षेमावाप्त्यर्थं पुत्र–पशु–विद्या–ऐश्वर्य–धन–धान्य–ग्रह–आराम–क्षेत्रादि अभिवृद्ध्यर्थं श्रीपरदेवतायाः परम प्रीतिकर शापोद्धार उत्कीलन मन्त्रजप –कवच–अर्गल–कीलक–नवाक्षरमन्त्रजप

–रात्रीसूक्तपठनपूर्वक मार्कण्डेयपुराणान्तर्गत सावर्णिमन्वन्तरे त्रयोदशाध्यायात्मक सप्तशतमन्त्ररूप चण्डिकाख्य पठनं तदन्तरं देवीसूक्त–नवाक्षरमन्त्रजप–रहस्यत्रय–उत्कीलनमन्त्रजपं करिष्ये।।

## गणेशपूजनं - गुरुपादुकास्मरणं

गणानां त्वा शौनको गृत्समदो गणपतिर्जगती निर्विघ्नता
सिद्ध्यर्थे महागणपतिस्मरणे विनियोगः ।।

ओं गणानां त्वा गणपतिं हवामहे कविं कवीनामुपमश्रवस्तमं।।
ज्येष्ठराजं ब्रह्मणां ब्रह्मणस्पत आ नः शृण्वन्नूतिभिःसीद सादनं ।।
सिद्धिबुद्धिशक्ति सहित महागणपतये नमो नमः इति ।।

ततः नमो गुरुभ्यो गुरुपादुकाभ्यो नमः परेभ्यः परपादुकाभ्यः ।।
आचार्यसिद्धेश्वर पादुकाभ्यो नमोस्तु लक्ष्मीपतिपादुकाभ्यः ।।
श्रीगुरुभ्यो नमो नमः ।। (इति श्रीगणपतिं सद्गुरुं च नत्वा) ।।

## आसनविधिः

अथासनविधिः ।। (स यथा) ।। (आसनाधो जलादिना त्रिकोणं विलिख्य) । ओं ह्रीं आधारशक्तिकमलासनाय नमः (इत्याधारशक्तिं संपूज्य तदुपर्यनुद्विग्नताकरं कुशकंबलाद्यन्यतममासनमास्तीर्य )।
ओं पृथ्वीति मंत्रस्य मेरुपृष्ठ ऋषिः ।। कूर्मो देवता ।। सुतलं छंदः ।।
आसने विनियोगः ।।

ओं पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।।
त्वं च धारय मां देवि पवित्रं कुरु चासनम् ।।

(इत्याधारशक्तिं संप्रार्थ्य)।। ओं भूर्भुवःस्वः
(इत्यासनं संप्रोक्ष्य तदुपरि प्राङ्मुख उदङ्मुखो वा उपविश्य)
ओं अनंतासनाय नमः ओं कूर्मासनाय नमः ओं विमलासनाय नमः
ओं पद्मासनाय नमः ओं योगासनाय नमः ओं आधारशक्त्यै नमः
ओं दुष्टविद्रावणनृसिंहासनाय नमः ओं मध्ये परम सुखासनाय नमः
(इति नत्वा) ।।

## ।। शिखाबन्धनं ।।

ओं ऊर्ध्वकेशि विरूपाक्षि मांसशोणितभक्षणे ।। तिष्ठ देवि शिखाबंधे चामुण्डे ह्यपराजिते ।। इति शिखामाबध्य । अप उपस्पृस्य ।

## अथ स्थलशुद्धिः

देवतामण्डपं चतुर्द्वारं विचिन्त्य ओं अंतरिक्षोंऽतरिता अरातयः हुं फट् इति मंडपांतः अक्षतान् क्षिप्त्वा ।।

## द्वारदेवता पूजनं

वामतो गुं गुरुभ्यो नमः ।। दक्षिणतो भं भद्रकाल्यै नमः ।।
उपरिष्टात् गं गणपतये नमः ।। (इति द्वारदेवताः संपूज्य )।।१।।

## अथ भूतशुद्धिः

इडया वायुमापूर्य कुंभके लंवंरंयंहं इति पंचभूतबीजानि सकृदावर्त्य पिंगलया रेचयेत् ।। ततो वमित्यमृतबीजेन प्राणायामं कृत्वा सद्वासनात्मकं देवीशरीरमुत्पाद्य सोहं इति मंत्रेण कुंडलिनीं ब्रह्मणोऽवहृत्य तत्रस्थं जीवं हृदि निधाय कुंडलिनीं मूलाधारगतां विभावयेदिति संक्षेपतो भूत-शुद्धिः ।।

## अथ बाह्यभूतशुद्धिः

ओं अपसर्पंतु ते भूता ये भूता भूमिसंस्थिताः ।।
ये भूता विघ्नकर्तारस्ते नश्यंतु शिवाज्ञया ।।

ओं अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशम्।।
सर्वेषामविरोधेन जपकर्म समारंभे ।।

(इति भूतान्युत्सार्य) ।।

## भैरवाज्ञा

अतिक्रूर महाकाय कल्पांतदहनोपम ।
भैरवाय नमस्तुभ्यमनुज्ञां दातुमर्हसि ।।

(इति भैरवाज्ञां गृहीत्वा )

## अथ विघ्नोत्सारणं आत्मरक्षणं च

मूलं पठन्दिव्यदृष्ट्यवलोकनेन दिव्यान् विघ्नानुत्सारयामि ओं फडिति प्रोक्षणेनांतरिक्षान्विघ्नानुत्सारयामि ओं फडिति वामपादपार्ष्णिघातेन

भौमान् विघ्नानुत्सारयामि ओं अस्त्राय फट्
इति तालत्रयेण दिग्बंधनं कृत्वा ओं नमः सुदर्शनाय अस्त्राय फट्
इति मंत्रेण छोटिकया वह्निप्राकारत्रयं विभाव्य।।

## दीप स्थापनं

घृतदीपो भवेद्दक्षे तैलदीपस्तु वामतः।
सितवर्तियुतो दक्षे रक्तवर्तिस्तु वामतः।।

(देव्या इति शेष :)

।। तत्स्थापनप्रकारः ।।
देवीपीठदक्षिणतो भूमौ गंधेन त्रिकोणं विलिख्य दीपाधारयंत्राय नमः
इति गंधपुष्पाक्षतैः समर्च्य।। तत्र घृतपूर्ण शुक्लवर्तियुत दीपपात्रं संस्थाप्य

दीपं प्रज्वाल्य नाम्ना पंचोपचारैः संपूज्य ।।
भो दीप देवीरूपस्त्वं कर्मसाक्षी ह्यविघ्नकृत् ।। यावत्कर्मसमाप्तिः स्यात्तावत्त्वं सुस्थिरा भव ।

इति संप्रार्थ्य । तेनैव प्रकारेण देवीपीठ वामभागे प्राग्वत्त्रिकोणे तैलपूर्णं रक्तवर्तियुतं दीपपात्रं संस्थाप्य दीपं प्रज्वाल्य संपूज्य भो दीपेति प्रार्थयेत् ।। इत्येवं स्थापितदीपावासमाप्ति रक्षेदिति ।।

## अथ यंत्रे देवतास्थापनं

दीपद्वयमध्यपीठे ताम्राद्यन्यतमपत्रे भूर्जपत्रे वा कुंकुमादिना देव्यष्टगंधेन वा वैकृतिकरहस्योक्तं यंत्रं लिखेत् ।।
महालक्ष्मीर्यदा पूज्येत्यादिश्लोकत्रयोक्तं यथा ।।

ओं गौर्या सह रुद्राय नमः

ओं स्वरया सह विरिञ्चये नमः

ओं लक्ष्म्या सह हृषीकेशाय नमः

ओं ऐं महाकाल्यै नमः ओं ह्रीं महालक्ष्म्यै नमः

ओं क्लीं महासरस्वत्यै नमः ओं अष्टभुजायै नमः

ओं अष्टादशभुजायै नमः ओं दशाननायै नमः

ओं महिषाय नमः, ओं सिंहाय नमः,

ओं कालाय नमः, ओं मृत्यवे नमः

## अथ प्राणप्रतिष्ठा

हृदि हस्तं दत्त्वा ओं आं ह्रीं क्रों मम प्राणा इह प्राणाः ओं आं ह्रीं क्रों मम जीव–इह स्थितः ओं  आं ह्रीं क्रों मम सर्वेन्द्रियाणि ओं आं ह्रीं क्रों मम वाङ्मनस्त्वक् चक्षुः श्रोत्रजिह्वाघ्राणवाक्पाणि पादपायूपस्थानि सर्वेन्द्रियाणि स्वस्थाने इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा ।। ओं असुनीते पुनरस्मासु चक्षुः पुनः प्राणमिहनो  धेहि भोगं ।। ज्योक्पश्येम सूर्यमुच्चरंतमनुमते मृलया नः स्वस्ति ।। गर्भाधानादिपंचदशसंस्कार सिद्ध्यर्थं (१५) पंचदश प्रणवावृत्तीः करिष्ये ।।

ओं रक्तांभोधिस्थ पोतोल्लसदरुणसरोजाधिरूढा कराब्जैः

पाशं कोदंडमिक्षूद्भवमथ गुणमप्यंकुशं पंचबाणान् ।
बिभ्राणाऽसृक्कपालं त्रिनयनलसिता पीनवक्षोरुहाढ्या
देवी बालार्कवर्णा भवतु सुखकरी प्राणशक्तिः परा नः।।
सुप्रतिष्ठितमस्त्विति संक्षेपेण प्राणप्रतिष्ठा ।। यथाशक्ति षोडशोपचार–
पूजाम् अथवा आवरणपूजां कुर्यात् ।

## अथ सरस्वती पूजनं

ओं नमः पिशाचनिकरंकिनि त्रिशूलखड्गहस्ते सिंहारूढे एह्येहि
आगच्छ आगच्छ इमां पूजां गृह्ण गृह्ण स्वाहा। श्रीसप्तशती सरस्वत्यै नमः
आवाहयामि ।। ततः ओं ह्रीं चंडिकायै नमः
इति मंत्रेण षोडशोपचारैः पूजयेदिति ।।

# षोडशोपचार पूजा

(पञ्चमुख दीपे,एकमुख दीपे, चित्रे वा पूजां कुर्यात् )

चण्डिकायै नमः ध्यायामि ।

चण्डिकायै नमः आवाहयामि।

चण्डिकायै नमः आसनं समर्पयामि ।

चण्डिकायै नमः पाद्यं समर्पयामि।

चण्डिकायै नमः अर्घ्यं समर्पयामि ।

चण्डिकायै नमः आचमनीयं समर्पयामि ।

चण्डिकायै नमः स्नानं समर्पयामि।

चण्डिकायै नमः वस्त्र उपवीत आभरणार्थे अक्षतान् समर्पयामि ।

चण्डिकायै नमः गन्धं, हरिद्रा कुङ्कुमं समर्पयामि ।

चण्डिकायै नमः पुष्पमालिकां समर्पयामि।

चण्डिकायै नमः पुष्पैः पूजयामि ।

## अर्चना

ओं काल्यै नमः

ओं कलविकरण्यै नमः

ओं बलविकरण्यै नमः
ओं बलायै नमः
ओं बलप्रमथिन्यै नमः
ओं सर्वभूतदमन्यै नमः
ओं चण्डिकायै नमः

ओं चण्डिकायै नमः धूपमाघ्रापयामि ।

ओं चण्डिकायै नमः दीपं दर्शयामि ।

ओं चण्डिकायै नमः नैवेद्यं समर्पयामि ।

ओं चण्डिकायै नमः कर्पूर नीराजनं दर्शयामि ।

# प्रार्थना

सर्वमंगल मांगल्ये शिवे सर्वार्थ साधिके।
शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ।।
रूपं देहि यशो देहि भगं भगवति देहि मे।
पुत्रान् देहि धनं देहि सर्वान् कामान् प्रदेहि मे ।।

(देवीमाहात्म्य पारायण अवसानसमयपर्यन्तं दीपं प्रज्वालयेत्
पारायणान्ते देवीं यथास्थानं कुर्यात् )

## शापोद्धारमन्त्रः (७ संख्यया जपं कुर्यात् )

ओं ह्रीं क्लीं श्रीं क्रां क्रीं चण्डिके देवि
शापानुग्रहं कुरु कुरु स्वाहा.

## उत्कीलनमन्त्रः (२१ संख्यया जपं कुर्यात् )

ओं श्रीं क्लीं ह्रीं सप्तशति चण्डिके
उत्कीलनं कुरु कुरु स्वाहा.

## कवचस्तोत्रम्

अस्य श्री चण्डी (देवी) कवचस्तोत्र महामन्त्रस्य, ब्रह्मा ऋषिः,
अनुष्टुप्छन्दः, (श्री महालक्ष्मीर्देवता–ह्रां बीजं, ह्रीं शक्तिः,
ह्रूं कीलकं– श्री महालक्ष्मी प्रसादसिद्ध्यर्थे जपे विनियोगः)
चामुण्डा देवता, अङ्गन्यासोक्त मातरो बीजम्, दिग्बन्धदेवतास्तत्त्वम्,
श्रीजगदम्बा प्रीत्यर्थे सप्तशती पाठाङ्गजपे विनियोगः

# ध्यानम्

सौवर्णांबुजमध्यगां त्रिनयनां सौदामिनी–सन्निभां
शंखं चक्रवराभयञ्च दधतीं इन्दोः कलां बिभ्रतीम् ।
ग्रैवेयांगद–हार–कुण्डलधरां आखण्डलाद्यैः स्तुतां
ध्यायेद्विन्ध्यनिवासिनीं शशिमुखीं पार्श्वस्थ–पञ्चाननाम् ।।

शंखं चक्रमथो धनुश्च दधतीं विभ्रामितां तर्ज्जनीं
वामे शक्तिमसिं शरान् कलयतीं तिर्यक् त्रिशूलं भुजैः ।
सन्नद्धां विविधायुधैः परिवृतां मन्त्रीं कुमारीजनैः
ध्यायेदिष्टवरप्रदां त्रिनयनां सिंहाधिरूढां शिवां ।।

वाणीपतेर्वर–विमोहित–दुष्टदैत्य–दर्पैहि–दष्ट–मनुजारिकुलाहितानि ।
तच्छृङ्गमध्य–नटनेन विहन्यमाना रक्षां करोतु मम सा त्रिपुराधिवासा ।।

शंखासि चाप–शर–भिन्नकरां त्रिनेत्रां
तिग्मेतरांशु–कलया विलसत् किरीटां ।
सिंहस्थितां ससुरसिद्धनुतां च दुर्गां दूर्वानिभां दुरितवर्गहरां नमामि ।।

मार्कण्डेय उवाच–

यद्गुह्यं परमं लोके सर्वरक्षाकरं नृणाम् ।
यन्न कस्यचिदाख्यातं तन्मे ब्रूहि पितामह ।। १

ब्रह्मोवाच–

अस्ति गुह्यतमं विप्र सर्वभूतोपकारकम् ।
देव्यास्तु कवचं पुण्यं तच्छृणुष्व महामुने ॥ २

प्रथमं शैलपुत्री(च)ति द्वितीयं ब्रह्मचारिणी ।
तृतीयं चन्द्रघण्टेति कूष्माण्डेति चतुर्थकं ॥ ३

पञ्चमं स्कन्दमातेति षष्ठं कात्यायनीति च ।
सप्तमं कालरात्रीति महागौरीति चाष्टमम् ॥ ४

नवमं सिद्धिदात्री (सिद्धिदा प्रोक्ता) च नवदुर्गाः प्रकीर्त्तिताः ।
उक्तान्येतानि नामानि ब्रह्मणैव महात्मना ॥ ५

अग्निना दह्यमानस्तु शत्रुमध्ये गतो रणे ।
विषमे दुर्गमे चैव भयार्त्ताः शरणं गताः ।। ६

न तेषां जायते किञ्चित् अशुभं रणसङ्कटे ।
(नापदं तस्य पश्यन्ति सर्व दुःख क्षयङ्करी)
नापदं तस्य पश्यामि शोकदुःखभयं न हि ।। ७

यैस्तु भक्त्या स्मृता नूनं तेषामृद्धिः प्रजायते ।
(ये त्वां स्मरन्ति देवेशि रक्षसे तान्न संशयः ।)
प्रेतसंस्था तु चामुण्डा वाराही महिषासना ।। ८

ऐन्द्री गजसमारूढा वैष्णवी गरुडासना ।
माहेश्वरी वृषारूढा कौमारी शिखिवाहना ।। ९

लक्ष्मीः पद्मासना देवी पद्महस्ता हरिप्रिया ।
श्वेतरूपधरा देवी ईश्वरी वृषवाहना
ब्राह्मी हंससमारूढा सर्वाभरणभूषिता ।
(इत्येता मातरः सर्वाः सर्वयोगसमन्विताः।)
नानाभरणशोभाढ्या नानारत्नोप शोभिताः ।। १०

दृश्यन्ते रथमारुढा देव्यः कोपसमन्विताः ।
शंखं चक्रं गदां शक्तिं हलं च मुसलायुधम् ।। ११

खेटकं तोमरं चैव परशुं पाशमेव च ।
कुन्तायुधं त्रिशूलं च शार्ङ्गमायुधमुत्तमम् ।। १२

दैत्यानां देहनाशाय भक्तानामभयाय च ।
धारयन्त्यायुधानीत्थं देवानां च हिताय वै ।। १३

(नमस्तेऽस्तु महारौद्रे महाघोरपराक्रमे ।)
महाबले महोत्साहे महाभय–विनाशिनि ।।
त्राहि मां देवि दुष्प्रेक्ष्ये शत्रूणां भयवर्धिनि ।। १४

प्राच्यां रक्षतु मामैन्द्री आग्नेय्यामग्निदेवता ।।
दक्षिणेऽवतु वाराही नैर्ऋत्यां खड्गधारिणी ।। १५

प्रतीच्यां वारुणी रक्षेत् वायव्यां मृगवाहिनी ।
रक्षेदुदीच्यां (उदीच्यां पातु) कौबेरी ईशान्यां
(कौमारी ऐशान्यां) शूलधारिणी ।। १६

ऊर्ध्वं ब्रह्माणि मे रक्षेत् अधस्ताद्वैष्णवी तथा ।
एवं दश दिशो रक्षेच्चामुण्डा शववाहना ।। १७

जया मे चाग्रतः पातु विजया पातु पृष्ठतः ।
अजिता वामपार्श्वे तु दक्षिणे चापराजिता ।। १८

शिखामुद्योतिनी रक्षेत् उमामूर्ध्नि व्यवस्थिता ।
मालाधरी ललाटे च भ्रुवौ रक्षेद्यशस्विनी ।। १९

त्रिनेत्रा च भ्रुवोर्मध्ये यमघण्टा च नासिके ।
शंङ्खिनी चक्षुषोर्मध्ये श्रोत्रयोर्विन्ध्य(द्वार)वासिनी ।। २०

कपोलौ कालिका रक्षेत् कर्णमूले तु शाङ्करी ।
नासिकायां सुगन्धा च उत्तरोष्ठे च चर्चिका ।। २१

अधरे चामृतकला जिह्वायां तु सरस्वती ।
दन्तान् रक्षतु कौमारी कण्ठदेशे (मध्ये) तु चण्डिका ।। २२

घण्टिकां चित्रघण्टा च महामाया च तालुके ।
कामाक्षी चिबुकं रक्षेत् वाचं मे सर्वमङ्गला ।। २३

ग्रीवायां भद्रकाली च पृष्ठवंशे धनुर्धरी ।
नीलग्रीवा बहिःकण्ठे नलिकां नलकूबरी ।। २४

खड्गधारिण्युभौ स्कन्धौ (स्कन्धयोः खड्गिनी रक्षेत्) बाहू मे वज्रधारिणी ।
हस्तयोर्दण्डिनी रक्षेत् अंबिका चाङ्गुलीषु च ।। २५

नखान् शूलेश्वरी रक्षेत् कुक्षौ रक्षेत् कुलेश्वरी (नलेश्वरी)।
स्तनौ रक्षेन्महादेवी मनश्शोकविनाशिनी ।। २६

हृदये ललिता देवी उदरे शूलधारिणी ।
नाभौ च कामिनी रक्षेत् गुह्यं गुह्येश्वरी तथा ।। २७

पूतनाकामिका (पूतनाथा च) मेढ्रं च गुदे (गुदं) महिषवाहिनी ।।
कट्यां भगवती रक्षेत् जानुनी विन्ध्यवासिनी ।। २८

(जङ्घे महाबला प्रोक्ता सर्वकामप्रदायिनी)
जङ्घे महाबला रक्षेत् जानुमध्ये विनायकी ।
गुल्फयोर्नारसिंही च पादपृष्ठे तु तौजसी (मितौचसी) ।। २९

पादांगुलीषु श्रीरक्षेत् (पादांगुली: श्रीधरी च) पादाऽधस्तलवासिनी ।
नखान् दंष्ट्राकराली च केशांश्चैवोर्ध्वकेशिनी ।। ३०

रोमकूपेषु कौमारी त्वचं वागीश्वरी तथा ।
रक्तमज्जावसामांसान्यस्थि–मेदांसि पार्वती ।। ३१

अन्त्राणि कालरात्री च पित्तं च मुकुटेश्वरी ।
पद्मावती पद्मकोशे कफे चूडामणिस्तथा ।। ३२

ज्वालामुखी नखज्वालां अभेद्या सर्वसन्धिषु ।
शुक्रं ब्रह्माणि मे रक्षेत् छायां छत्रेश्वरी तथा ।। ३३

अहङ्कारं मनो बुद्धिं रक्षेन्मे (रक्ष मे) धर्म (चारीणी) धारिणी । ३४

(वज्रहस्ता च मे रक्षेत्प्राणं कल्याणशोभना ।
रसे रूपे च गन्धे च शब्दे स्पर्शे च योगिनी ।
सत्त्वं रजस्तमश्चैव रक्षेन्नारायणी सदा ।

आयू रक्षतु वाराही धर्मं रक्षतु वैष्णवी।)
प्राणाऽपानौ तथा व्यानं समानोदानमेव च ।।

यशः कीर्तिं च लक्ष्मीं च सदा रक्षतु (धनं विद्यां च) चक्रिणी । ३५
गोत्रमिन्द्राणि मे रक्षेत् पशून् मे रक्ष चण्डिके ।।

पुत्रान् रक्षेन्महालक्ष्मीः भार्यां रक्षतु भैरवी ।
मार्गं क्षेमकरी रक्षेत् विजया सर्वतः स्थिता ।।
(पन्थानं सुपथा रक्षेन्मार्गं क्षेमकरी तथा।
राजद्वारे महालक्ष्मीर्विजया सर्वतः स्थिता) ३६

रक्षाहीनं तु यत् स्थानं वर्जितं कवचेन तु ।
तत् सर्वं रक्ष मे देवि जयन्ती पापनाशिनी ।। ३७

पदमेकं न गच्छेत् तु यदीच्छेच्छुभमात्मनः ।
कवचेनावृतो नित्यं यत्र यत्रैव गच्छति ।। ३८

तत्र तत्रार्थ-लाभश्च विजयः सार्वकामिकः ।
यं यं चिन्तयते कामं तं तं प्राप्नोति निश्चितं ।। ३९

परमैश्वर्यमतुलं प्राप्स्यते भूतले पुमान् ।
निर्भयो जायते मर्त्यः संग्रामेष्वपराजितः ।। ४०

त्रैलोक्ये तु भवेत् पूज्यः कवचेनावृतः पुमान् ।
इदं तु देव्याः कवचं देवानामपि दुर्लभम् ।। ४१

यः पठेत् प्रयतो नित्यं त्रिसन्ध्यं श्रद्धयाऽन्वितः ।
दैवी कला भवेत् तस्य त्रैलोक्येष्वपराजितः ।। ४२

जीवेद्वर्षशतं साग्रं अपमृत्यु विवर्जितः ।
नश्यन्ति व्याधयः सर्वे लूताविस्फोटकादयः ।। ४३

स्थावरं जङ्गमं चापि (चैव) कृत्रिमं चापि यद्विषं ।
अभिचाराणि सर्वाणि मन्त्रयन्त्राणि भूतले ।। ४४

भूचराः खेचराश्चैव जलजाश्चोपदेशिकाः ।
सहजा कुलजा माला डाकिनी शाकिनी तथा ।। ४५

अन्तरिक्षचरा घोरा डाकिन्यश्च महाबलाः ।
ग्रह–भूत–पिशाचाश्च यक्ष–गन्धर्व–राक्षसाः ।। ४६

ब्रह्मराक्षस–वेतालाः कूष्माण्डा भैरवादयः ।
नश्यन्ति दर्शनात्तस्य कवचे हृदि संस्थिते ।। ४७

मानोन्नतिर्भवेद्राज्ञः तेजोवृद्धिकरं परं ।
यशसा वर्धते सोऽपि कीर्तिमण्डितभूतले ।। ४८

जपेत् सप्तशतीं चण्डीं कृत्वा तु कवचं पुरा ।
यावद्भूमण्डलं धत्ते सशैलवनकाननं ।। ४९

तावत्तिष्ठति मेदिन्यां सन्ततिः पुत्रपौत्रिकी ।
देहान्ते परमं स्थानं यत्सुरैरपि दुर्लभम् ।।
प्राप्नोति पुरुषो नित्यं महामाया प्रसादतः । ५०
लभते परमं रूपं शिवेन सह मोदते ।। ओं ।।

।। इति कवचं ।।

# अर्गलास्तोत्रम्

अस्य श्री अर्गलास्तोत्र–महामन्त्रस्य स्वर्णाकर्षण–भैरव(विष्णु) ऋषिः। अनुष्टुप् छन्दः श्री महालक्ष्मी चण्डिका देवता। अं बीजं, गं शक्तिः लं कीलकं श्री महालक्ष्मी–चण्डिकाप्रसाद–सिद्ध्यर्थे जपे विनियोगः (सप्तशती–पाठाङ्गजपे विनियोगः)

## ध्यानम्

प्राकाश–मध्य–स्थित–चित्स्वरूपां वराभये सन्दधतीं त्रिनेत्राम् ।
सिन्दूरवर्णाश्चित–कोमलाङ्गीं मायामयीं तत्वमयीं नमामि ।।

अर्गलं कीलकं चादौ पठित्वा कवचं पठेत् ।
जपेत्सप्तशतीं पश्चात्क्रम एष शिवोदितः ।। १

अर्गलं दुरितं हन्ति कीलकं फलदं तथा ।
कवचं रक्षते नित्यं चण्डिकात्रितयं पठेत् ।। २

अर्गलं हृदये यस्य तथानर्गलवानसौ ।
भविष्यतीति निश्चित्य शिवेन रचितं पुरा ।। ३

कीलकं हृदये यस्य स कीलितमनोरथः ।
भविष्यति न संदेहो नान्यथा शिवभाषितम् ।। ४

कवचं हृदये यस्य सर्वत्र कवची खलु ।
ब्रह्मणा निर्मितं पूर्वमिति निश्चित्य चेतसा ।। ५

[ या देवी स्तूयते नित्यं विबुधैर्वेदपारगैः ।
सा मे वसतु जिह्वाग्रे ब्रह्मरूपा सरस्वती ।। ६ ]

* [ ] पाठ भेदः

जयं त्वं देवि चामुण्डे जय भूतापहारिणी ।
जय सर्वगते देवि कालरात्रि नमोऽस्तु ते ।। ७

मार्कण्डेय उवाच

एकापि त्रिविधाख्याता सप्तधा सैव कीर्तिता ।
तस्या भेदा ह्यनन्ताश्च तन्माहात्म्यं शिवोदयम् ।। ८

मार्कण्डेय उवाच

जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ।। १

मधुकैटभ–विद्रावि विधातृवरदे नमः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। २

महिषासुरनिर्नाश(शि)–विधात्रि वरदे नमः (भक्तानां सुखदे नमः) ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। ३

रक्तबीजवधे देवि चण्डमुण्डविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। ४

शुम्भस्यैव निशुम्भस्य धूम्राक्षस्य च मर्दिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। ५

वन्दितांघ्रियुगे देवि (देव) सर्व–सौभाग्य–दायिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। ६

अचिन्त्यरूपचरिते सर्वशत्रुविनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। ७

नतेभ्यः सर्वदा भक्त्या चण्डिके (दुरितापहे) प्रणताय मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। ८

स्तुवद्भ्यो भक्तिपूर्वं त्वां चण्डिके व्याधिनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। ९

चण्डिके सततं ये त्वां अर्चयन्तीह भक्तितः ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। १०

देहि सौभाग्यमारोग्यं देहि (देवि) मे परमं सुखं ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। ११

विधेहि द्विषतां नाशं विधेहि बलमुच्चकैः।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। १२

विधेहि देवि कल्याणं विधेहि परमां (विपुलां) श्रियं ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। १३

सुरासुर–शिरोरत्न–संस्तुते–(निर्घृष्ट) चरणेऽम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। १४

विद्यावन्तं यशस्वन्तं लक्ष्मीवन्तं जनं कुरु ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। १५

प्रचण्डदैत्यदर्पघ्ने चण्डिके प्रणताय मे ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। १६

चतुर्भुजे चतुर्वक्त्रसंस्तुते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि।। १७

कृष्णेन संस्तुते देवि शश्वद्भक्त्या सदांबिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। १८

हिमाचल–सुतानाथ–संस्तुते (पूजिते) परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। १९

इन्द्राणीपति–सद्भाव–पूजिते परमेश्वरि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। २०

देवि प्रचण्डदोर्दण्ड–दैत्य–दर्प–विनाशिनि ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २१

देवि भक्तजनोद्दाम–दत्तानन्दोदयेऽम्बिके ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ॥ २२

पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ।
तारिणीं दुर्गसंसारसागरस्य कुलोद्भवाम् ॥ २३

इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः ।
स तु सप्तशती–संख्या–वरमाप्नोति सम्पदाम् (सम्पदः) ॥ २४

# कीलकस्तोत्रम्

अस्य श्री कीलकस्तोत्र–महामन्त्रस्य विशुद्धज्ञान(शिव) ऋषिः.
अनुष्टुप् छन्दः श्री महासरस्वती देवता । ऐं बीजं । ह्रीं शक्तिः।
क्लीं कीलकं । श्री चण्डिका प्रसादसिद्ध्यर्थे
(श्री जगदाम्बा प्रीत्यर्थं सप्तशती पाठाङ्ग) जपे विनियोगः।

अस्य श्री कीलकस्तोत्र महामन्त्रस्य विशुद्ध ज्ञान (शिव) ऋषिः
अनुष्टुप् छन्दः । श्री चण्डिका देवता । सां बीजं । क्लीं शक्तिः ।
क्लूं कीलकं । श्री चण्डिका प्रसाद सिद्ध्यर्थे जपे विनियोगः ।

## ध्यानम्

शोणप्रभं सोमकलावतंसं पाणिस्फुरत् पञ्चशरेक्षुचापं ।
प्राणप्रियं नौमि पिनाकपाणेःकोणत्रयस्थं कुलदैवतं नः।।

ऋषिरुवाच- (मार्कण्डेय उवाच)

विशुद्धज्ञानदेहाय त्रिवेदी दिव्यचक्षुषे ।
श्रेयःप्राप्ति-निमित्ताय नमः सोमार्धधारिणे । १

सर्वमेतद्विजानीयान्मन्त्राणामभिकीलकं ।
सोऽपि क्षेममवाप्नोति सततं जाप्य-तत्परः ।। २

सिद्ध्यन्त्युच्चाटनादीनि वस्तूनि सकलान्यपि ।
एतेन स्तुवतां देवि स्तोत्रमात्रेण सिद्ध्यति ।। ३

न मन्त्रो नौषधं तत्र न किञ्चिदपि विद्यते ।
विना जाप्येन सिद्ध्येत सर्वमुच्चाटनादिकं ।। ४

समग्राण्यपि सिद्ध्यन्ति (सेत्स्यन्ति) लोकशंकामिमां हरः ।
कृत्वा निमन्त्रयामास सर्वमेवमिदं शुभं ।। ५

स्तोत्रं वै चण्डिकायास्तु तच्च गुह्यं चकार सः ।
समाप्तिर्न च पुण्यस्य तां यथावन्नियन्त्रणां ।। ६

सोऽपि क्षेममवाप्नोति सर्वमेव (वं) न संशयः ।
कृष्णायां वा चतुर्दश्यामष्टम्यां वा समाहितः ।। ७

ददाति प्रतिगृह्णाति नान्यथैषा प्रसीदति ।
इत्थं रूपेण कीलेन महादेवेन कीलितं ।। ८

यो निष्कीलां विधायैनां नित्यं जपति संस्फुटम् ।
स सिद्धः सगणः सोऽपि गन्धर्वो जायते (ऽवने) नरः ।। ९

न चैवाप्यटतस्तस्य भयं क्वापीह जायते ।
नापमृत्युवशं याति मृतो मोक्षमवाप्नुयात् ।। १०

ज्ञात्वा प्रारभ्य कुर्वीत ह्य(न)कुर्वाणो विनश्यति ।
ततो ज्ञात्वैव संपन्नं इदं प्रारभ्यते बुधैः ।। ११

सौभाग्यादि च यत्किंचिद् दृश्यते ललनाजने।
तत्सर्वं तत्प्रसादेन तेन जाप्यमिदं शुभम् ।। १२

शनैस्तु जप्यमानेऽस्मिन् स्तोत्रे संपत्तिरुच्चकैः ।
भवत्येव समग्रापि ततः प्रारभ्यमेव तत् ।। १३

ऐश्वर्यं यत् प्रसादेन सौभाग्यारोग्य-संपदः ।
शत्रुहानिः परो मोक्षः स्तूयते सा न किं जनैः ।। १४

[ इदं स्तोत्रं पठित्वा तु महास्तोत्रं पठेन्नरः ।
स रहस्यर्चनोपेतः समस्त फलमश्नुते ।। १५ ]

।। इति कीलकस्तोत्रम् ।।

# नवार्णमन्त्रविधिः

ओं अस्यश्रीनवार्णमंत्रस्य ।। ब्रह्मविष्णुरुद्राऋषयः गायत्र्युष्णिगनुष्टुभश्छंदांसि ।। श्रीमहाकालीमहालक्ष्मी–महासरस्वत्यो देवताः।। ऐं बीजं, ह्रीं शक्तिं, क्लीं कीलकं, नंदाशाकंभरीभीमाःशक्तयः।। रक्तदंतिकादुर्गाभ्रामर्योबीजानि।। अग्निवायुसूर्यास्तत्त्वानि ।। श्रीमहाकाली महालक्ष्मी महासरस्वती प्रीत्यर्थं जपेविनियोगः ।। ब्रह्मविष्णुरुद्रऋषिभ्यो नमः शिरसि।। गायत्र्युषणागनुष्टुप्छंदोभ्यो नमः मुखे ।। श्रीमहाकाली महालक्ष्मी महासरस्वती देवताभ्यो नमः हृदि ।। नंदाशाकम्भरीमाशक्तिभ्योनमो

दक्षिणस्तने ।। रक्तदंतिकादुर्गाभ्रामरीबीजेभ्यो नमो वामस्तने ।। अग्निवायुसूर्यतत्त्वेभ्यो नमो नाभौ ।। इतिऋष्यादिन्यासः ।। मूलेन करौ संशोधयेत् ।।

## एकादशन्यासाः

### १. तत्रादौमातृकान्यासः

सर्वत्रादौ प्रणवोच्चारः ।। अं नमो ललाटे ।। आं नमो मुखवृत्ते ।। इं नमो दक्षिणनेत्रे ।। ईं नमो वामनेत्रे ।। उं नमो दक्षिणकर्णे ।। ऊं नमो वामकर्णे ।। ऋं नमो दक्षिणनसि ।। ॠं नमो वामनसि ।। ऌं नमो दक्षिणगंडे ।। ॡं नमो वामगंडे ।। एं नमः ऊर्ध्वोष्ठे ।। ऐं नमोऽधरोष्ठे ।। ओं नम ऊर्ध्वदंतपंक्तौ ।।

औं नमोऽधोदंतपंक्तौ ।। अं नमःशिरसि ।। अः नमो मुखे ।। कं नमो दक्षबाहुमूले ।। खं नमो दक्षकूर्परे ।। गं नमो दक्षमणिबंधे ।। घं नमो दक्षांगुलिमूले ।। ङं नमो दक्षांगुल्यग्रे ।। चं नमो वामबाहुमूले ।। छं नमो वामकूर्परे ।। जं नमो वाममणिबंधे ।। झं नमो वामांगुलिमूले ।। ञं नमो वामांगुल्यग्रे ।।टं नमो दक्षपादमूले ।। ठं नमो दक्षजानुनि ।।डं नमो दक्षगुल्फे ।। ढं नमो दक्षपादांगुलिमूले ।। णं नमो दक्षपादांगुल्यग्रे ।। तं नमो वामपादमूले ।। थं नमो वामजानुनि ।। दं नमो वामगुल्फे ।। धं नमो वामपादांगुलिमूले ।। नं नमो वामपादांगुल्यग्रे ।। पं नमो दक्षपार्श्वे ।। फं नमो वामपार्श्वे ।। बं नमः पृष्ठे ।। भं नमो नाभौ ।। मं नमो जठरे ।।

यं नमो हृदि ।। रं नमोदक्षांसे ।। लं नमः ककुदि ।। वं नमो वामांसे ।।
शं नमो हृदादिदक्षहस्तांते।। षं नमो हृदादिवामहस्तांते ।।
सं नमो हृदादिदक्षपादांते ।। हं नमो हृदादिवामपादांते ।।
ळं नमो जठरे ।। क्षं नमो मुखे ।।

।। इति मातृकान्यासो देवीसारूप्यप्रदः प्रथमः ।।

## २. सारस्वतोजाड्यविनाशको द्वितीय :

ऐं ह्रीं क्लीं नमः कनिष्ठयोः ।। ऐं ह्रीं क्लीं नमोऽनामिकयोः ।। ऐं ह्रीं क्लीं नमोमध्यमयोः ।। ऐं ह्रीं क्लीं नमः तर्जन्योः ।। ऐं ह्रीं क्लींनमोंऽगुष्ठयोः ।। ऐं ह्रीं क्लीं नमः करमध्ये ।। ऐं ह्रीं क्लीं नमः करपृष्ठे ।। ऐं ह्रीं क्लीं

नमोमणिबंधयोः ।। ऐं ह्रीं क्लीं नमः कूर्परयोः ।। ऐं ह्रीं क्लीं नमो हृदयाय नमः ।। ऐं ह्रीं क्लीं नमःशिरसे स्वाहा ।। ऐं ह्रीं क्लीं नमः शिखायै वषट् ।। ऐं ह्रीं क्लीं नमः कवचाय हुं ।।
ऐं ह्रीं क्लीं नमोनेत्रत्रयाय वौषट् ।। ऐं ह्रीं क्लीं नमो अस्त्राय फट् ।।

।। इति सारस्वतोजाड्यविनाशको द्वितीयः ।।

## ३. मातृगणन्यासः

ह्रीं ब्राह्मी पूर्वस्यां मां पातु ।। ह्रीं माहेश्वरी आग्नेय्यां मां पातु ।।
ह्रीं कौमारी दक्षिणस्यां मां पातु ।। ह्रीं वैष्णवी नैर्ऋत्यां मां पातु ।
ह्रीं वाराही पश्चिमायां मां पातु ।। ह्रीं इंद्राणी वायव्यां मां पातु ।।

ह्रीं चामुण्डा उत्तरस्यां मां पातु ।। ह्रीं महालक्ष्मी ऐशान्यां मां पातु ।।
ह्रीं व्योमेश्वरी ऊर्ध्वे मां पातु ।। ह्रीं सप्तद्वीपेश्वरी भूमौ मां पातु ।।
ह्रीं कामेश्वरी पाताले मां पातु ।।

।। इति मातृगणन्यासः त्रैलोक्यविजयप्रदःतृतीयः ।।

## ४. नंदजादिन्यासः

कमलांकुश–मंडिता नंदजा पूर्वांगं मे पातु ।।
खड्गपात्रधरा रक्तदंतिका दक्षिणाङ्गं मे पातु ।।
पुष्पपल्लवसंयुता शाकंभरी पश्चिमांगं मे पातु ।।
धनुर्बाणकरा दुर्गा वामांगं मे पातु ।।

शिरःपात्रकरा भीमा मस्तकाच्चरणावधि मां पातु ।।
चित्रकांति भृद् भ्रामरी पादादि मस्तकांतं मे पातु ।।

।। इति जरामृत्युहरो नंदजादिन्यासः चतुर्थः ।।

## ५. ब्रह्मादिन्यासः

पादादिनाभिपर्यन्तं ब्रह्मा मां पातु ।। नाभेर्विशुद्धि पर्यंतं जनार्दनो मां पातु ।। विशुद्धेर्ब्रह्मरंध्रांतं रुद्रो मां पातु ।। हंसः मे पदद्वयं पातु ।। वैनतेयःकरद्वयं मे पातु ।। वृषभश्चक्षुषी मे पातु ।। गजाननः सर्वांगं मे पातु ।। आनंदमयोहरिः परापरौ देहभागौ मे पातु ।।

।। इति सर्वकामदो ब्रह्मादिन्यासः पंचमः ।।

## ६. महालक्ष्म्यादिन्यासः

अष्टादशभुजा लक्ष्मीर्मध्यभागं मे पातु ।।
अष्टभुजा महासरस्वती ऊर्ध्वभागं मे पातु ।।
दशभुजा महाकाली अधोभागं मे पातु ।।
सिंहो हस्तद्वयं मे पातु ।। परहंसोऽक्षियुगं मे पातु ।।
महिषारूढो यमःपदद्वयं मे पातु ।।
महेशश्चंडिकायुक्तः सर्वांगं मे पातु ।।

।। इति महालक्ष्म्यादिन्यासःसद्गतिप्रदःषष्ठः ।।

## ७. मूलाक्षरन्यासः

ऐं नमो ब्रह्मरन्ध्रे ।। ह्रीं नमो दक्षिणनेत्रे ।। क्लीं नमो वामनेत्रे ।।
चां नमो दक्षकर्णे ।। मुं नमो वामकर्णे ।। डां नमो दक्षनासापुटे ।।
यैं नमो वामनासापुटे ।। विं नमो मुखे ।। च्चें नमो गुह्ये ।।

।। इति मूलाक्षरन्यासो रोगक्षयकरःसप्तमः ।।

## ८. विलोमाक्षरन्यासः

च्चें नमो गुह्ये ।। विं नमो मुखे ।। यैं नमो वामनासापुटे ।।
डां नमो दक्षिणनासापुटे ।। मुं नमो वामकर्णे ।। चां नमो दक्षकर्णे ।।
क्लीं नमो वामनेत्रे ।। ह्रीं नमो दक्षनेत्रे ।। ऐं नमो ब्रह्मरंध्रे ।।

।। इति विलोमाक्षरन्यासः सर्वदुःखनाशकोऽष्टमः ।।

## ९. मूलव्यापकोन्यासः

मूलमुच्चार्य ।। मस्तकाच्चरणांतं चरणान्मस्तकांतं
अष्टवारंव्यापकं कुर्यात् ।।

स यथा ।। प्रथमं पुरतो मूलेन मस्तकाच्चरणावधि ।। १
ततश्चरणान्मस्तकावधि मूलोच्चारेणव्यापकं ।। २
एवंदक्षिणतः पश्चाद्वामभागे चेति प्रतिदिग्भागेऽनुलोमविलोमतया
द्विर्द्विरिति अष्टवारंव्यापकंभवति ।।

इति मूलव्यापको देवताप्राप्तिकरो न्यासः

## १०. मूलषडंगन्यासः

मूलमुच्चार्य हृदयाय नमः ।।
एवं प्रत्यंगं सर्वं मूलमुच्चार्य षडंगेषु न्यसेत् ।।

इति मूलषडंगन्यासस्त्रैलोक्यवशकरो दशमः

## ११. सर्वरक्षाकरन्यासः

खड्गिनी शूलिनी घोरागदिनी चक्रिणी–तथा ।
शंखिनी चापिनी बाणभुशंडी परिघायुधा ।। १

सौम्या सौम्यतराशेष सौम्येभ्यस्त्वतिसुंदरी ।
परापराणां परमा त्वमेवपरमेश्वरी ।। २

यच्चकिंचित्क्वचिद्वस्तु सदसद्वाखिलात्मिके ।
तस्यसर्वस्य याशक्तिः सात्वं किंस्तूयते मया ।। ३

यया त्वया जगत्स्त्रष्टा जगत्पात्यत्तियो जगत् ।
सोऽपिनिद्रावशंनीतःकस्त्वांस्तोतुमिहेश्वरः ।। ४

विष्णुःशरीरग्रहणमहमीशान एव च ।
कारितास्ते यतोऽतस्त्वां कःस्तोतुं शक्तिमान्भवेत् ।। ५

आद्यं वाग्बीजं कृष्णतरं ध्यात्वा सर्वांगे विन्यसामि इति सर्वांगे-न्यसेत्।।

शूलेन पाहि नो देवि पाहि खड्गेन चांबिके।
घंटास्वनेन नःपाहि चापज्यानिःस्वनेन च ।। १

प्राच्यां रक्षप्रतीच्यां च चंडिके रक्षदक्षिणे।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ।। २

सौम्यानि यानिरूपाणि त्रैलोक्ये विचरंति ते।
यानि चात्यन्तघोराणि तै रक्षास्मांस्तथाभुवं।। ३

खड्ग शूलगदादीनि यानिचास्त्राणि तेंऽबिके।
करपल्लव संगीनि तैरस्मान् रक्षसर्वतः ।। ४

द्वितीयं मायाबीजं सूर्यसदृशं ध्यात्वा सर्वांगे विन्यसेत् ।।

सर्वस्वरूपे सर्वेशे सर्वशक्ति समन्विते।
भयेभ्यस्त्राहि नो देवि दुर्गेदेवि नमोस्तुते।। १

एतत्तेवदनं सौम्यं लोचनत्रय भूषितं ।
पातु नः सर्वभूतेभ्यःकात्यायनि नमोऽस्तुते ।। २

ज्वाला–करालमत्युग्रमशेषासुर सूदनं ।
त्रिशूलं पातुनो भीतेर्भद्रकालि नमोऽस्तुते ।। ३

हिनस्तिदैत्य तेजांसि–स्वनेनापूर्य या जगत् ।
सा घंटा पातुनो देवि पापेभ्यो नः सुतानिव ।। ४

असुरासृग्वसापंक चर्चितस्ते करोज्ज्वलः ।
शुभाय खड्गो भवतु चंडिके त्वां नता वयं ।। ५

तृतीयं कामबीजं स्फटिकाभं ध्यात्वा सर्वांगे विन्यसामि ।।

इति सर्वांगेविन्यसेत् ।।

इतिसूक्तादिबीजत्रयन्यासः पंचमः सर्वानिष्टहरः सर्वाभीष्टदः सर्वरक्षाकरश्चैकादशः ।।

## करन्यासः

ओं ऐं अङ्गुष्ठाभ्यां नमः । ओं ह्रीं तर्जनीभ्यां नमः ।

ओं क्लीं मध्यमाभ्यां नमः।ओं चामुण्डायै अनामिकाभ्यां नमः ।

ओं विच्चे कनिष्ठिकाभ्यां नमः ।

ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे करतलकरपृष्ठाभ्यां नमः ।

## हृदयादिन्यासः

ओं ऐं हृदयाय नमः । ओं ह्रीं शिरसे स्वाहा । ओं क्लीं– शिखायै वषट् ।
ओं चामुण्डायै कवचाय हुम् । ओं विच्चे नेत्रत्रयाय वौषट् ।
ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे अस्त्राय फट् ।

## अक्षरन्यासः

ओं ऐं नमः शिखायाम् । ओं ह्रीं नमः – दक्षिणनेत्रे ।
ओं क्लीं नमः – वामनेत्रे । ओं चां नमः – दक्षिणकर्णे ।
ओं मुं नमः–वामकर्णे । ओं डां नमः दक्षिणनासापुटे ।
ओं यैं नमः– वामनासापुटे ।

ओं विं नमः–मुखे । ओं च्चें नमः– गुह्ये ।

एवम् विन्यस्याष्टावारम् मूलेन व्यापकम् कुर्यात् ।

## दिङ्न्यासः

ओं ऐं–प्राच्यै नमः । ओं ऐं–आग्नेय्यै नमः । ओं ह्रीं–दक्षिणायै नमः ।

ओं ह्रीं – नैर्ऋत्यैनमः । ओं क्लीं–प्रतीच्यै नमः ।

ओं क्लीं वायव्यै नमः । ओं चामुण्डायै–उदीच्यै नमः ।

ओं विच्चे ईशान्यै नमः ।

ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे ऊर्ध्वायै नमः ।

ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे भूम्यै नमः ।

## ध्यानम्

खड्गं चक्र– गदेषु–चाप–परिघाञ्छूलं भुशुण्डीं शिरः
शङ्खं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ।
नीलाश्मद्युतिमास्य–पाददशकां सेवे महाकालिकां
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ।। १

अक्षस्त्रक्परशु–गदेषु कुलिशं पद्मं धनुष्कुण्डिकां ।
दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ।
शूलं पाश–सुदर्शने च दधतीं हस्तैः प्रवालप्रभां
सेवे सैरिभ–मर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ।। २

घण्टाशूल–हलानि शङ्खमुसले चक्रं धनुः सायकं
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशु–तुल्यप्रभाम् ।
गौरी देह–समुद्भवां त्रिजगतामाधारभूतां महापूर्वामत्र
सरस्वतीमनुभजे शुम्भादि–दैत्यार्दिनीम् ।। ३

ततः "ऐं ह्रीं अक्षमालिकायै नमः"

इति मन्त्रेण मालायाः पूजां कृत्वा प्रार्थयेत्

ओं मां माले महामाये सर्वशक्तिस्वरूपिणि ।
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।।
ओं अविघ्नं कुरु माले त्वं गृह्णामि दक्षिणे करे ।
जपकाले च सिद्ध्यर्थं प्रसीद मम सिद्धये ।।

ओं अक्षमालाधिपतये सुसिद्धिं देहि देहि सर्वमन्त्रार्थसाधिनि ।
साधय साधय सर्वसिद्धिं परिकल्पय परिकल्पय मे स्वाहा ।।
ततः "ऐं ह्रीं क्लीं चामुण्डायै विच्चे"

इति मन्त्रं १०८ वारं जप्त्वा

(मन्त्रस्य अर्थः तु "महासरस्वत्यादिरूपिणि सच्चिदानन्दमये चण्डिके ब्रह्मविद्याप्राप्तये वयं त्वां सर्वदाध्यायामः" ।।)

## जपसमर्पणम्

गुह्यातिगुह्य गोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ।।

इति देव्याः वाम हस्ते जपं निवेदयेत् ।

## ।। अथ चंडीपंचाक्षर मंत्रन्यासः ।।

ओं ह्रीं हृदयाय नमः ।। ओं चं शिरसे स्वाहा ।। ओं डिं शिखायै वषट् ।। ओं कां कवचाय हुं ।। ओं यैं नेत्रत्रयाय वौषट् ।। ओं ह्रीं चंडिकायै अस्त्रायफट्।।

# श्री देव्यथर्वशीर्षम्

ओं सर्वे वै देवा देवीमुपतस्थुः कासि त्वं महादेवीति।। १

साब्रवीत् –अहं ब्रह्मस्वरूपिणी ।

मत्तः प्रकृति–पुरुषात्मकं जगत् । शून्यं चाशून्यं च ।। २

अहमानन्दानानन्दो । अहं विज्ञानाविज्ञाने ।
अहं ब्रह्माब्रह्मणी वेदितव्ये ।
अहं पञ्चभूतान्यपञ्चभूतानि । अहमखिलं जगत्।। ३

वेदोऽहमवेदोऽहम् । विद्याहमविद्याहम् ।
अजाहमनजाहम् । अधश्चोर्ध्वं च तिर्यक्चाहम् ।। ४

अहं रुद्रेभिर्वसुभिश्चरामि । अहमादित्यैरुत विश्वदेवैः ।
अहं मित्रावरुणावुभौ बिभर्मि । अहमिन्द्राग्नी–अहमश्विनावुभौ ।। ५

अहं सोमं त्वष्टारं पूषणं भगं दधामि ।
अहं विष्णुमुरुक्रमं ब्रह्माणमुत प्रजापतिं दधामि ।। ६

अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते ।
अहं राष्ट्री सङ्गमनी वसूनां चिकितुषी प्रथमा यज्ञियानाम् ।
अहं सुवे पितरमस्य मूर्धन्मम योनिरप्स्वन्तः समुद्रे ।
य एवं वेद । स दैवीं सम्पदमाप्नोति ।। ७

ते देवा अब्रुवन् – नमो देव्यै महादेव्यै शिवायै सततं नमः ।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम् ।। ८

तामग्निवर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम् ।
दुर्गां देवीं शरणं प्रपद्यामहेऽसुरान्नाशयित्र्यै ते नमः ।। ९

देवीं वाचमजनयन्त देवास्तां विश्वरूपाः पशवो वदन्ति ।
सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुप सुष्टुतैतु ।। १०

कालरात्रीं ब्रह्मस्तुतां वैष्णवीं स्कन्दमातरम् ।
सरस्वतीमदितिं दक्षदुहितरं नमामः पावनां शिवाम् ।। ११

महालक्ष्म्यै च विद्महे सर्वशक्त्यै च धीमहि ।
तन्नो देवी प्रचोदयात् ।। १२

अदितिर्ह्यजनिष्ट दक्ष या दुहिता तव ।
तां देवा अन्वजायन्त भद्रा अमृतबन्धवः ।। १३

कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः ।
पुनर्गुहा सकला मायया च पुरूच्यैषा विश्वमातादिविद्योम्।। १४

एषाऽऽत्मशक्तिः। एषा विश्वमोहिनी। पाशाङ्कुशधनुर्बाणधरा।
एषा श्रीमहाविद्या । य एवं वेद स शोकं तरति ।। १५

नमस्ते अस्तु भगवति मातरस्मान् पाहि सर्वतः ।। १६

सैषाष्टौ वसवः । सैषैकादश रुद्राः । सैषा द्वादशादित्याः ।
सैषा विश्वेदेवाः सोमपा असोमपाश्च । सैषा यातुधाना असुरा रक्षांसि
पिशाचा यक्षाः सिद्धाः । सैषा सत्त्वरजस्तमांसि।
सैषा ब्रह्मविष्णुरुद्ररूपिणी । सैषा प्रजापतीन्द्रमनवः।
सैषा ग्रहनक्षत्रज्योतींषि । कलाकाष्ठादिकालरूपिणी ।
तामहं प्रणौमि नित्यम् ।।

पापापहारिणीं देवीं भुक्तिमुक्तिप्रदायिनीम् ।
अनन्तां विजयां शुद्धां शरण्यां शिवदां शिवाम् ।। १७

वियदीकारसंयुक्तं वीतिहोत्रसमन्वितम् ।
अर्धेन्दु–लसितं देव्या बीजं सर्वार्थसाधकम् ।। १८

एवमेकाक्षरं ब्रह्म यतयः शुद्धचेतसः ।
ध्यायन्ति परमानन्दमया ज्ञानाम्बुराशयः ।। १९

वाङ्मया ब्रह्मसूस्तस्मात् षष्ठं वक्त्रसमन्वितम् ।
सूर्योऽवामश्रोत्रबिन्दुसंयुक्तष्टात्तृतीयकः ।
नारायणेन सम्मिश्रो वायुश्चाधरयुक् ततः ।
विच्चे नवार्णकोऽर्णः स्यान्महदानन्द–दायकः ।। २०

हृत्पुण्डरीक–मध्यस्थां प्रातः सूर्य–समप्रभाम् ।

पाशाङ्कुशधरां सौम्यां वरदाभय-हस्तकाम् ।
त्रिनेत्रां रक्तवसनां भक्तकामदुघां भजे ।। २१

नमामि त्वां महादेवीं महाभयविनाशिनीम् ।
महादुर्गप्रशमनीं महाकारुण्यरूपिणीम् ।। २२

यस्याः स्वरूपं ब्रह्मादयो न जानन्ति तस्मादुच्यते अज्ञेया। यस्या अन्तो न लभ्यते तस्मादुच्यते अनन्ता। यस्या लक्ष्यंनोपलक्ष्यते तस्मादुच्यते अलक्ष्या । यस्या जननं नोपलभ्यते तस्मादुच्यते अजा । एकैव सर्वत्र वर्तते तस्मादुच्यते एका। एकैव विश्वरूपिणी तस्मादुच्यते नैका। अत एवोच्यते अज्ञेयानन्तालक्ष्याजैका नैकेति ।। २३

मन्त्राणां मातृका देवी शब्दानां ज्ञानरूपिणी ।
ज्ञानानां चिन्मयातीता शून्यानां शून्यसाक्षिणी ।
यस्याः परतरं नास्ति सैषा दुर्गा प्रकीर्तिता ।। २४

तां दुर्गां दुर्गमां देवीं दुराचारविघातिनीम् ।
नमामि भवभीतोऽहं संसारार्णवतारिणीम् ।। २५

इदमथर्वशीर्षं योऽधीते स पञ्चाथर्वशीर्ष-जप-
फल-माप्नोति। इदमथर्वशीर्षमज्ञात्वा योऽर्चां स्थापयति-शतलक्षं
प्रजप्त्वापि सोऽर्चासिद्धिं न विन्दति ।
शतमष्टोत्तरं-चास्य पुरश्चर्याविधिः स्मृतः ।

दशवारं पठेद् यस्तु सद्यः पापैः प्रमुच्यते ।
महादुर्गाणि तरति महादेव्याः प्रसादतः ।। २६

सायमधीयानो दिवसकृतं पापं नाशयति । प्रातरधीयानो रात्रिकृतं पापं नाशयति । सायं प्रातः प्रयुञ्जानो अपापो भवति । निशीथे तुरीयासंध्यायां जप्त्वा वाक्सिद्धिर्भवति। नूतनायां प्रतिमायां जप्त्वा देवतासान्निध्यं भवति । प्राणप्रतिष्ठायां जप्त्वा प्राणानां प्रतिष्ठा भवति । भौमाश्विन्यां महादेवीसंनिधौ जप्त्वा महामृत्युं तरति ।
स महामृत्युं तरति य एवं वेद । इत्युपनिषत् ।।

# वेदोक्तं रात्रिसूक्तम्

## ।। न्यासः ।।

रात्रीति सूक्तस्य। कुशिक ऋषिः। गायत्रीछन्दः। रात्रिः देवता।
श्री जगदंबा-प्रीत्यर्थे सप्तशती पाठादौ जपे विनियोगः ।।

ओं रात्री व्यंख्यदायती पुरुत्रा देव्य१क्षभिः।
विश्वा अधि श्रियोऽधित । १

ओर्वप्रा अमर्त्या निवतो देव्यु१ द्वतः ।
ज्योतिषा बाधते तमः ।। २

निरुस्वसारमस्कृतोषसं देव्यायती ।
अपेदु हासते तमः ।। ३

सा नो अद्य यस्या वयं नि ते यामन्न विक्ष्महि ।
वृक्षे न वसतिं वयः ।। ४

निग्रामासो अविक्षत नि पद्वन्तो नि पक्षिणः ।
निश्येनासश्चिदर्थिनः ।। ५

यावया वृक्यं १ वृकं यवयस्तेन–मूर्म्ये ।
अथा नः सुतरा भव ।। ६

उप॑ मा॒ पेपि॑श॒त्तमः॑ कृ॒ष्णं व्यं॑क्तमस्थित ।
उष॑ ऋ॒णेव॑ यातय ।। ७

उप॑ ते॒ गा इ॒वाक॑रं वृणी॒ष्व दु॑हितर्दिवः ।
रात्रि॒स्तोमं॒ न जि॒ग्युषे॑ ।। ८

इति वेदोक्तं रात्रिसूक्तम् समाप्तम्

## तन्त्रोक्तं रात्रिसूक्तम्

विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीं ।
निद्रां भगवतीं विष्णोः अतुलां तेजसः प्रभुः ।। १

ब्रह्मोवाच–

त्वं स्वाहा त्वं स्वधा त्वं हि वषट्कारः स्वरात्मिका ।
सुधा त्वमक्षरे नित्ये त्रिधा मात्रात्मिका स्थिता ।। २

अर्धमात्रा स्थिता नित्या याऽनुच्चार्या विशेषतः ।
त्वमेव सन्ध्या सावित्री त्वं देवि जननी परा ।। ३

त्वयैतद्धार्य्यते विश्वं त्वयैतत्सृज्यते जगत् ।
त्वयैतत्पाल्यते देवि त्वमत्स्यन्ते च सर्वदा ।। ४

विसृष्टौ सृष्टिरूपा त्वं स्थितिरूपा च पालने ।
तथा संहृतिरूपाऽन्ते जगतोऽस्य जगन्मये ।। ५

महाविद्या महामाया महामेधा महास्मृतिः ।
महामोहा च भवती महादेवी महासुरी ।। ६

प्रकृतिस्त्वं च सर्वस्य गुणत्रयविभाविनी ।
कालरात्रिर्महारात्रिः मोहरात्रिश्च दारुणा ।। ७

त्वं श्रीस्त्वमीश्वरी त्वं ह्रीस्त्वं बुद्धिर्बोधलक्षणा ।
लज्जा पुष्टिस्तथा तुष्टिः त्वं शान्तिः क्षान्तिरेव च ।। ८

खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ।। ९

सौम्या सौम्यतराऽशेष–सौम्येभ्यस्त्वतिसुन्दरी ।
परापराणां परमा त्वमेव परमेश्वरी ।। १०

यच्च किंचित् क्वचिद्वस्तु सदसद्वाऽखिलात्मिके ।
तस्य सर्वस्य या शक्तिः सा त्वं किं स्तूयसे तदा ।। ११

यया त्वया जगत् स्रष्टा जगत्पात्यात्ति यो जगत् ।
सोऽपि निद्रावशं नीतः कस्त्वां स्तोतुमिहेश्वरः ।। १२

विष्णुः शरीरग्रहणमहमीशान एव च ।
कारितास्ते यतोऽतस्त्वां कः स्तोतुं शक्तिमान् भवेत् ।। १३

सा त्वमित्थंप्रभावैः स्वैः उदारैर्देविसंस्तुता ।
मोहयैतौ दुराधर्षौ असुरौ मधुकैटभौ ।। १४

प्रबोधं च जगत्स्वामी नीयतामच्च्युतो लघु ।
बोधश्च क्रियतामस्य हन्तुमेतौ महासुरौ ।। १५

इति तन्त्रोक्तंरात्रिसूक्तम् समाप्तम्

# नवाक्षरी विवेचनम्

अस्य श्री नवाक्षरी महामन्त्रस्य मार्कण्डेय ऋषिः जगती छन्दः दुर्गा–लक्ष्मी–सरस्वती देवता ह्रां बीजं (नाभौ) ह्रीं शक्तिः (गुह्ये) ह्रूं कीलकम् (पादयोः) दुर्गा–लक्ष्मी–सरस्वती–प्रसाद–सिद्ध्यर्थे जपे विनियोगः (सर्वांगे) ।। ह्रां अंगुष्ठाभ्यां नमः । ह्रीं तर्जनीभ्यां नमः । ह्रूं मध्यमाभ्यां नमः । ह्रैं अनामिकाभ्यां नमः । ह्रौं कनिष्ठिकाभ्यां नमः ।

ह्रः करतलकरपृष्ठाभ्यां नमः।। ह्रां हृदयाय नमः । ह्रीं शिरसे स्वाहा ।
ह्रूं शिखायै वषट् । ह्रैं कवचाय हुं । ह्रौं नेत्रत्रयाय वौषट् ।
ह्रः अस्त्राय फट् ।। भूर्भुवस्सुवरोमिति दिग्बन्धः ।।

ध्यानम् – मातर्मे मधुकटभघ्नि महिषप्राणापहारोद्यमे
हेलानिर्मित धूम्रलोचनवधे हे चण्डमुण्डादिनि ।
निश्शेषीकृत रक्तबीजदनुजे नित्ये निशुंभापहे
शुंभध्वंसिनि संहराशु दुरितं दुर्गे नमस्तेऽम्बिके ।।

लं–पृथिव्यात्मिकायै गन्धं समर्पयामि ।
हं–आकाशात्मिकायै पुष्पैः पूजयामि ।
यं–वाय्वात्मिकायै धूपमाघ्रापयामि ।

रं–अग्न्यात्मिकायै दीपं दर्शयामि ।

वं–अमृतात्मिकायै अमृतं महानैवेद्यं निवेदयामि ।

सं–सर्वात्मिकायै सर्वोपचार पूजां समर्पयामि ।

मन्त्रः ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे ।।

भूर्भुवस्सुवरोमिति दिग्विमोकः ।।

ध्यानम् – मातर्मे.....दुर्गे नमस्तेऽम्बिके ।। (Page No. 93)

लमित्यादि पंचपूजा – समर्पणम्–गुह्यातिगुह्य गोप्त्री त्वं गृहाणास्मत्कृतं जपम् । सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा ।।

इति नवाक्षरी विवेचनं समाप्तम्

# सप्तशतीन्यासः

श्री सप्तशतीस्तोत्रमालामंत्रस्य ब्रह्मविष्णुरुद्रा ऋषयः,
श्रीमहाकाली महालक्ष्मी–महासरस्वत्यो देवताः,
गायत्र्युष्णिगनुष्टु–भश्छन्दांसि, नन्दा–शाकम्भरी–भीमाः शक्तयः,
रक्तदन्तिका– दुर्गा–भ्रामर्यो बीजानि, अग्निवायु सूर्यास्तत्त्वानि,
ऋग्यजुःसामवेदाः ध्यानानि, सकलकामनासिद्धये श्री महाकाली–
महालक्ष्मी–महासरस्वती–देवताप्रीत्यर्थे जपे विनियोगः ।

ओं खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।
शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ।। अङ्गुष्ठाभ्यां नमः ।

ओं शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।
घण्टास्वनेन नः पाहि चापज्यानिः स्वनेन च ।। तर्जनीभ्यां नमः ।

ओं प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ।। मध्यमाभ्यां नमः ।

ओं सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते।
यानि चात्यर्थघोराणि तै रक्षास्मांस्तथा भुवम् ।।
अनामिकाभ्यां नमः। ओं खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ।
करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः।। कनिष्ठिकाभ्यां नमः ।।

ओं सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ॥

करतलकरपृष्ठाभ्यां नमः ।

ओं खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा।
शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ॥ हृदयाय नमः॥

ओं शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च॥ शिरसे स्वाहा॥

ओं प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे।
भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ॥ शिखायै वषट् ॥

ऐन्द्रीकुलिश- पातेन शतशो दैत्य-दानवाः।
पेतुर्विदारिताः पृथ्व्यां रुधिरौघ-प्रवर्षिणः।। ३५

तुण्ड-प्रहार-विध्वस्ता दंष्ट्राग्र-क्षत-वक्षसः।
वाराहमूर्त्या न्यपतंश्चक्रेण च विदारिताः।। ३६

नखैर्विदारितांश्चान्यान् भक्षयन्ती महासुरान्।
नारसिंही चचाराजौ नादापूर्ण-दिगंबरा।। ३७

चण्डाट्टहासैरसुराः शिवदूत्यभिदूषिताः।
पेतुः पृथिव्यां पतितांस्तांश्चखादाथ सा तदा।। ३८

इति मातृगणं क्रुद्धं मर्दयन्तं महासुरान्।
दृष्ट्वाभ्युपायैर्विविधैर्नेशुर्देवारि-सैनिकाः।। ३९

पलायनपरान् दृष्ट्वा दैत्यान् मातृगणार्दितान्।
योद्धुमभ्याययौ क्रुद्धो रक्तबीजो महासुरः।। ४०

रक्तबिन्दुर्यदा भूमौ पतत्यस्य शरीरतः।
समुत्पतति मेदिन्यां तत्प्रमाणस्तदासुरः।। ४१

युयुधे स गदापाणिरिन्द्रशक्त्या महासुरः
ततश्चैन्द्री स्ववज्रेण रक्तबीजमताडयत्।। ४२

कुलिशेनाहतस्याशु बहु सुस्राव शोणितम्।
समुत्तस्थुस्ततो योधास्तद्रूपास्तत्पराक्रमाः।। ४३

यावन्तः पतितास्तस्य शरीराद्रक्तबिन्दवः।
तावन्तः पुरुषा जातास्तद्वीर्य-बलविक्रमाः।। ४४

ते चापि युयुधुस्तत्र पुरुषा रक्त-संभवाः।
समं मातृभिरत्युग्र-शस्त्रपातातिभीषणम्।। ४५

पुनश्च वज्रपातेन क्षतमस्य शिरो यदा।
ववाह रक्तं पुरुषास्ततो जाताः सहस्त्रशः।। ४६

वैष्णवी समरे चैनं चक्रेणाभिजघान ह।
गदया ताडयामास ऐन्द्री तमसुरेश्वरम्।। ४७

वैष्णवी-चक्र-भिन्नस्य रुधिरस्त्राव-संभवैः।
सहस्त्रशो जगद्व्याप्तं तत् प्रमाणैर्महासुरैः।। ४८

शक्त्या जघान कौमारी वाराही च तथासिना।
माहेश्वरीत्रिशूलेन रक्तबीजं महासुरम्।। ४९

स चापि गदया दैत्यः सर्वा एवाहनत् पृथक्।
मातॄः कोपसमाविष्टो रक्तबीजो महासुरः।। ५०

तस्याहतस्य बहुधा शक्ति-शूलादिभिर्भुवि।
पपात यो वै रक्तौघस्तेनासञ्छतशोऽसुराः।। ५१

तैश्चासुरासृक्-संभूतैरसुरैः सकलं जगत्।
व्याप्तमासीत् ततो देवा भयमाजग्मुरुत्तमम्।। ५२

तान् विषण्णान् सुरान् दृष्ट्वा चण्डिका प्राह सत्वरा।
उवाच कालीं चामुण्डे विस्तीर्णं वदनं कुरु।। ५३

मच्छस्त्र-पात-संभूतान् रक्तबिन्दून् महासुरान्।
रक्तबिन्दोः प्रतीच्छ त्वं वक्त्रेणानेन वेगिता।। ५४

भक्षयन्ती चर रणे तदुत्पन्नान् महासुरान्।
एवमेष क्षयं दैत्यः क्षीणरक्तो गमिष्यति।। ५५

भक्ष्यमाणास्त्वया चोग्रा न चोत्पत्स्यन्ति चापरे।
इत्युक्त्वा तां ततो देवी शूलेनाभिजघान तम्।। ५६

मुखेन काली जगृहे रक्तबीजस्य शोणितम्।। ५७

ततोऽसावाजघानाथ गदया तत्र चण्डिकाम्।
न चास्या वेदनां चक्रे गदापातोऽल्पिकामपि ।। ५८

तस्याहतस्य देहात्तु बहु सुस्राव शोणितम्।
यतस्ततस्तद्वक्त्रेण चामुण्डा संप्रतीच्छति।। ५९

मुखे समुद्गता येऽस्या रक्तपातान्महासुराः।
तांश्चखादाथ चामुण्डा पपौ तस्य च शोणितम्।। ६०

देवी शूलेन वज्रेण बाणैरसिभिर्ऋष्टिभिः।
जघान रक्तबीजं तं चामुण्डा पीतशोणितम्।। ६१

स पपात महीपृष्ठे शस्त्र-सङ्घ-समाहतः।
नीरक्तश्च महीपाल रक्तबीजो महासुरः।। ६२

ततस्ते हर्षमतुलमवापुस्त्रिदशा नृप।
हते मातृगणस्तस्मान् (तेषां मातृगणोजातो)
ननर्तासृङ्गमदोद्धतः।। ६३ (५०२)

।। ओं इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये अष्टमोऽध्यायः।।

आहुतिः ओं क्लीं जयन्ती सांगायै सायुधायै सशक्तिकायै सपरिवारायै सवाहनायै रक्ताक्ष्यै अष्टमातृसहितायै महाहुतिं समर्पयामि नमः स्वाहा॥

# नवमोऽध्यायः

# निशुंभवधः

।।ध्यानम्।।

ओं बन्धूक-कांचननिभं रुचिराक्षमालां
पाशांकुशौ च वरदां निजबाहुदण्डैः।
विभ्राणमिन्दु-शकलाभरणं त्रिनेत्रम्
अर्धाम्बिकेशमनिशं वपुराश्रयामि।।

ओं राजोवाच।। १ (५०३)

विचित्रमिदमाख्यातं भगवन् भवता मम।
देव्याश्चरित-माहात्म्यं रक्तबीज-वधाश्रितम्।। २

भूयश्चेच्छाम्यहं श्रोतुं रक्तबीजे निपातिते।
चकार शुंभो यत्कर्म निशुंभश्चातिकोपनः।। ३

ऋषिरुवाच।। ४

चकार कोपमतुलं रक्तबीजे निपातिते।
शुंभासुरो निशुंभश्च हतेष्वन्येषु चाहवे।। ५

हन्यमानं महासैन्यं विलोक्यामर्षमुद्वहन्।
अभ्यधावन्निशुंभोऽथ मुख्ययासुरसेनया।। ६

तस्याग्रतस्तथा पृष्ठे पार्श्वयोश्च महासुराः।
संदष्टौष्ठ-पुटाः क्रुद्धा हन्तुं देवीमुपाययुः।। ७

आजगाम महावीर्यः शुंभोऽपि स्वबलैर्वृतः।
निहन्तुं चण्डिकां कोपात् कृत्वा युद्धं तु मातृभिः।। ८

ततो युद्धमतीवासीद्देव्या शुंभ-निशुंभयोः।
शरवर्षमतीवोग्रं मेघयोरिव वर्षतोः।। ९

चिच्छेदास्ताञ्छरांस्ताभ्यां चण्डिका स्वशरोत्करैः।
ताडयामास चांगेषु शस्त्रौघैरसुरेश्वरौ।। १०

निशुंभो निशितं खड्गं चर्म चादाय सुप्रभम्।
अताडयन्मूर्ध्नि सिंहं देव्या वाहनमुत्तमम्।। ११

ताडिते वाहने देवी क्षुरप्रेणासिमुत्तमम्।
निशुंभस्याशु चिच्छेद चर्म चाप्यष्ट-चन्द्रकम्।। १२

छिन्ने चर्मणि खड्गे च शक्तिं चिक्षेप सोऽसुरः।
तामप्यस्य द्विधा चक्रे चक्रेणाभिमुखागताम्।। १३

कोपाध्मातो निशुंभोऽथ शूलं जग्राह दानवः।
आयान्तं मुष्टिपातेन देवी तच्चाप्यचूर्णयत्।। १४

आविध्यात गदां सोऽपि चिक्षेप चण्डिकां प्रति।
सापि देव्या त्रिशूलेन भिन्ना भस्मत्वमागता।। १५

ततः परशुहस्तं तमायान्तं दैत्यपुङ्गवम्।
आहत्य देवी बाणौघैरपातयत भूतले।। १६

तस्मिन्निपतिते भूमौ निशुंभे भीमविक्रमे।
भ्रातर्यतीव संक्रुद्धः प्रययौ हन्तुमंबिकाम्।। १७

स रथस्थस्तथात्युच्चैर्गृहीत-परमायुधैः।
भुजैरष्टाभिरतुलैर्व्याप्याशेषं बभौ नभः।। १८

तमायान्तं समालोक्य देवी शङ्खमवादयत्।
ज्याशब्दं चापि धनुषश्चकारातीव दुःसहम्।। १९

पूरयामास ककुभो निजघण्टा-स्वनेन च।
समस्त दैत्यसैन्यानां तेजोवध-विधायिना।। २०

ततः सिंहो महानादैस्त्याजितेभ-महामदैः
पूरयामास गगनं गां तथैव दिशो दश।। २१

ततः काली समुत्पत्य गगनं क्ष्मामताडयत्।
कराभ्यां तन्निनादेन प्राक्स्वनास्ते तिरोहिताः।। २२

अट्टाट्टहासमशिवं शिवदूती चकार ह।
तैः शब्दैरसुरास्त्रेसुः शुंभः कोपं परं ययौ।। २३

दुरात्मंस्तिष्ठ तिष्ठेति व्याजहारांबिका यदा।
तदा जयेत्यभिहितं देवैराकाश-संस्थितैः।। २४

शुंभेनागत्य या शक्तिर्मुक्ता ज्वालातिभीषणा।
आयान्ती वह्निकूटाभा सा निरस्ता महोल्कया।। २५

सिंहनादेन शुंभस्य व्याप्तं लोकत्रयान्तरम्।
निर्घात-निःस्वनो घोरो जितवानवनीपते।। २६

शुंभमुक्तान् शरान् देवी शुंभस्तत्प्रहितान् शरान्।
चिच्छेद स्वशरैरुग्रैः शतशोऽथ सहस्त्रशः।। २७

ततः सा चण्डिका क्रुद्धा शूलेनाभिजघान तम्।
स तदाभिहतो भूमौ मूर्च्छितो निपपात ह।। २८

ततो निशुंभः संप्राप्य चेतनामात्त-कार्मुकः।
आजघान शरैर्देवीं कालीं केसरिणं तथा।। २९

पुनश्च कृत्वा बाहूनामयुतं दनुजेश्वरः।
चक्रायुधेन दितिजश्छादयामास चण्डिकाम्।। ३०

ततो भगवती क्रुद्धा दुर्गा दुर्गार्तिनाशिनी।
चिच्छेद तानि चक्राणि स्वशरैः सायकांश्च तान्।। ३१

ततो निशुंभो वेगेन गदामादाय चण्डिकाम्।
अभ्यधावत वै हन्तुं दैत्यसेना-समावृतः।। ३२

तस्यापतत एवाशु गदां चिच्छेद चण्डिका।
खड्गेन शितधारेण स च शूलं समाददे।। ३३

शूलहस्तं समायान्तं निशुंभममरार्दनम्।
हृदि विव्याध शूलेन वेगाविद्धेन चण्डिका।। ३४

भिन्नस्य तस्य शूलेन हृदयान्निः सृतोऽपरः।
महाबलो महावीर्यस्तिष्ठेति पुरुषो वदन्।। ३५

तस्य निष्क्रामतो देवी प्रहस्य स्वनवत् ततः।
शिरश्चिच्छेद खड्गेन ततोऽसावपतद् भुवि।। ३६

ततः सिंहश्चखादोग्रं दंष्ट्राक्षुण्ण शिरोधरान्।
असुरांस्तांस्तथा काली शिवदूती तथापरान्।। ३७

कौमारी-शक्तिनिर्भिन्नाः केचिन्नेशुर्महासुराः।
ब्रह्माणी मन्त्र-पूतेन तोयेनान्ये निराकृताः।। ३८

माहेश्वरी त्रिशूलेन भिन्नाः पेतुस्तथापरे।
वाराही तुण्डघातेन केचिच्चूर्णीकृता भुवि।। ३९

खण्डं-खण्डं च चक्रेण वैष्णव्या दानवाः कृताः।
वज्रेण चैन्द्री हस्ताग्र-विमुक्तेन तथापरे।। ४०

केचिद्विनेशुरसुराः केचिन्नष्टा महाहवात्।
भक्षिताश्चापरे काली शिवदूती मृगाधिपैः।। ४१ (५४३)

।। ओं इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये नवमोऽध्यायः।।

आहुतिः ओं क्लीं जयन्ती सांगायै सायुधायै सशक्तिकायै सपरिवारायै वाग्भवबीजाधिष्ठात्र्यै महाकाल्यै महाहुतिं समर्पयामि नमः स्वाहा ॥

# दशमोऽध्यायः

## शुंभवधः

।।ध्यानम्।।

ओं उत्तप्त-हेम-रुचिरां रवि-चन्द्र-वह्नि-नेत्रां
  धनुःशरयुतांकुश-पाशशूलम्।
रम्यैर्भुजैश्च दधतीं शिवशक्तिरूपां
  कामेश्वरीं हृदि भजामि धृतेन्दु-लेखाम्।।

ओं ऋषिरुवाच।। १ (५४४)

निशुंभं निहतं दृष्ट्वा भ्रातरं प्राणसंमितम्।
हन्यमानं बलं चैव शुंभः क्रुद्धोऽब्रवीद्वचः।। २

बलावलेपाद्-दुष्टे त्वं मा दुर्गे गर्वमावह।
अन्यासां बलमाश्रित्य युद्धयसे यातिमानिनी।। ३

देव्युवाच।। ४

एकैवाहं जगत्यत्र द्वितीया का ममापरा।
पश्यैता दुष्ट मय्येव विशन्त्यो मद्विभूतयः।। ५

ततः समस्तास्ता देव्यो ब्रह्माणी प्रमुखा लयम्।
तस्या देव्यास्तनौ जग्मुरेकैवासीत्तदांबिका।। ६

देव्युवाच।। ७

अहं विभूत्या बहुभिरिह रूपैर्यदास्थिता।
तत्संहृतं मयैकैव तिष्ठाम्याजौ स्थिरो भव।। ८

ऋषिरुवाच।। ९

ततः प्रववृते युद्धं देव्याः शुंभस्य चोभयोः।
पश्यतां सर्व-देवानामसुराणां च दारुणम्।। १०

शरवर्षैः शितैः शस्त्रैस्तथास्त्रैश्चैव दारुणैः।
तयोर्युद्धमभूद् भूयः सर्वलोक भयङ्करम्।। ११

दिव्यान्यस्त्राणि शतशो मुमुचे यान्यथांबिका।
बभञ्ज तानि दैत्येन्द्रस्तत्प्रतीघात- कर्तृभिः।। १२

मुक्तानि तेन चास्त्राणि दिव्यानि परमेश्वरी।
बभञ्ज लीलयैवोग्र-हुंकारोच्चारणादिभिः।। १३

ततः शरशतैर्देवीमाच्छादयत सोऽसुरः।
सापि तत्कुपिता देवी धनुश्चिच्छेद चेषुभिः।। १४

छिन्ने धनुषि दैत्येन्द्रस्तथा शक्तिमथाददे
चिच्छेद देवी चक्रेण तामप्यस्य करे स्थिताम्।। १५

ततः खड्गमुपादाय शतचन्द्रं च भानुमत्।
अभ्यधावत्तदा देवीं दैत्यानामधिपेश्वरः।। १६

तस्यापतत एवाशु खड्गं चिच्छेद चण्डिका।
धनुर्मुक्तैः शितैर्बाणैश्चर्म चार्क-करामलम्।। १७

अश्वांश्च पातयामास रथं सारथिना सह ।
हताश्वः स तदा दैत्यश्छिन्न-धन्वा विसारथिः।। १८

जग्राह मुद्गरं घोरमंबिका-निधनोद्यतः।
चिच्छेदापततस्तस्य मुद्गरं निशितैः शरैः।। १९
तथापि सोऽभ्यधावत्तां मुष्टिमुद्यम्य वेगवान्।
स मुष्टिं पातयामास हृदये दैत्य-पुङ्गवः।। २०

देव्यास्तं चापि सा देवी तलेनोरस्यताडयत्।
तलप्रहाराभिहतो निपपात महीतले।। २१

स दैत्यराजः सहसा पुनरेव तथोत्थितः।
उत्पत्य च प्रगृह्योच्चैर्देवीं गगनमास्थितः।। २२

तत्रापि सा निराधारा युयुधे तेन चण्डिका।। २३

नियुद्धं खे तदा दैत्यश्चण्डिका च परस्परम्।
चक्रतुः प्रथमं सिद्ध-मुनि-विस्मय-कारकम्।। २४

ततो नियुद्धं सुचिरं कृत्वा तेनांबिका सह।
उत्पाट्य भ्रामयामास चिक्षेप धरणीतले।। २५

स क्षिप्तो धरणीं प्राप्य मुष्टिमुद्यम्य वेगितः (वेगतः) (वेगवान्)।
अभ्यधावत दुष्टात्मा चण्डिका-निधनेच्छया।। २६

तमायान्तं ततो देवी सर्वदैत्य-जनेश्वरम्।
जगत्यां पातयामास भित्त्वा शूलेन वक्षसि।। २७

स गतासुः पपातोर्व्यां देवी-शूलाग्र-विक्षतः।
चालयन् सकलां पृथ्वीं साब्धिद्वीपां सपर्वताम्।। २८

ततः प्रसन्नमखिलं हते तस्मिन् दुरात्मनि।
जगत्-स्वास्थ्यमतीवाप निर्मलं चाभवन्नभः।। २९

उत्पात-मेघाः सोल्का ये प्रागासंस्ते शमं ययुः।
सरितो मार्गवाहिन्यस्तथासंस्तत्र पातिते।। ३०

ततो देवगणाः सर्वे हर्षनिर्भर-मानसाः।
बभूवुर्निहते तस्मिन् गन्धर्वा ललितं जगुः।। ३१

अवादयंस्तथैवान्ये ननृतुश्चाप्सरो-गणाः।
ववुः पुण्यास्तथा वाताः सुप्रभोऽभूद्दिवाकरः।।
(जज्ज्वलुश्चाग्नयः शान्ताः शान्ता दिग्जनितस्वनाः) ओं ३२

(५७५)

।। ओं इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये दशमोऽध्यायः।।

आहुतिः ओं क्लीं जयन्ती सांगायै सायुधायै सशक्तिकायै
सपरिवारायै सवाहनायै सिंहवाहिन्यै त्रिशूलपाशधारिण्यै
महाहुतिं समर्पयामि नमः स्वाहा ॥

एकादशोऽध्यायः

# देवी स्तुतिः

।।ध्यानम्।।

ओं बालरविद्युतिमिन्दु-किरीटां तुङ्गकुचां नयनत्रय-युक्ताम्।
स्मेरमुखीं वरदांकुश-पाशाभीतिकरां प्रभजे भुवनेशीम्।।

ओं ऋषिरुवाच।। १ (५७६)

देव्या हते तत्र महासुरेन्द्रे सेन्द्राः सुरा वह्निपुरोगमास्ताम्।
कात्यायनीं तुष्टुवुरिष्ट-लाभाद्
विकाशि-वक्त्राब्ज विकाशिताशाः।। २

देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य।
प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य ।। ३

आधारभूता जगतस्त्वमेका महीस्वरूपेण यतः स्थितासि।
अपां स्वरूपस्थितया त्वयैतदाप्यायते कृत्स्नमलंघ्य वीर्ये।। ४

त्वं वैष्णवीशक्तिरनन्तवीर्या विश्वस्य बीजं परमासिमाया।
संमोहितं देवि समस्तमेतत् त्वं वै प्रसन्ना भुवि मुक्तिहेतुः।। ५

विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु।
त्वयैकया पूरितमम्बयैतत् का ते स्तुतिः स्तव्यपरा-परोक्तिः।। ६

सर्वभूता यदा देवी स्वर्गमुक्ति-प्रदायिनी।
त्वं स्तुता स्तुतये का वा भवन्तु परमोक्तयः।। ७

सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते।
स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते।। ८

कला-काष्ठादिरूपेण परिणाम-प्रदायिनि।
विश्वस्योपरतौ शक्ते नारायणि नमोऽस्तु ते।। ९

सर्वमङ्गल-माङ्गल्ये शिवे सर्वार्थ साधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ।। १०

सृष्टि-स्थिति-विनाशानां शक्तिभूते सनातनि।
गुणाश्रये गुणमये नारायणि नमोऽस्तु ते।। ११

शरणागत-दीनार्त-परित्राण-परायणे।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते।। १२

हंसयुक्त-विमानस्थे ब्रह्माणी रूपधारिणि।
कौशांभः-क्षरिके देवि नारायणि नमोऽस्तु ते।। १३

त्रिशूल-चन्द्राहिधरे महावृषभवाहिनि।
माहेश्वरी-स्वरूपेण नारायणि नमोऽस्तु ते।। १४

मयूर-कुक्कुट-वृते महाशक्तिधरेऽनघे।
कौमारी रूप-संस्थाने नारायणि नमोऽस्तु ते।। १५

शङ्ख-चक्र-गदा शार्ङ्ग-गृहीत परमायुधे।
प्रसीद वैष्णवीरूपे नारायणि नमोऽस्तु ते।। १६

गृहीतोग्र-महाचक्रे दंष्ट्रोद्धृत- वसुन्धरे।
वराहरूपिणि शिवे नारायणि नमोऽस्तु ते।। १७

नृसिंहरूपेणोग्रेण हन्तुं दैत्यान् कृतोद्यमे।
त्रैलोक्य-त्राण-सहिते नारायणि नमोऽस्तु ते।। १८

किरीटिनि महावज्रे सहस्त्र-नयनोज्ज्वले।
वृत्र-प्राणहरे चैन्द्रि नारायणि नमोऽस्तु ते।। १९

शिवदूती-स्वरूपेण हतदैत्य-महाबले।
घोररूपे महारावे नारायणि नमोऽस्तु ते।। २०

दंष्ट्राकरालवदने शिरोमाला-विभूषणे।
चामुण्डे मुण्डमथने नारायणि नमोऽस्तु ते।। २१

लक्ष्मि लज्जे महाविद्ये श्रद्धे पुष्टिस्वधे ध्रुवे।
महारात्रि महाऽविद्ये नारायणि नमोऽस्तु ते।। २२

मेधे सरस्वति वरे भूति बाभ्रवि  तामसि।
नियते त्वं प्रसीदेशे नारायणि नमोऽस्तु ते।।                    २३

सर्व-स्वरूपे सर्वेशे सर्वशक्ति-समन्विते।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ।।                    २४

एतत्ते वदनं सौम्यं लोचनत्रय-भूषितम्।
पातुः न सर्वभीतिभ्यः कात्यायनि नमोऽस्तु ते ।।                    २५

ज्वाला-करालमत्युग्रमशेषासुरसूदनम्।
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते।।                    २६

हिनस्ति दैत्य तेजांसि स्वनेनापूर्य या जगत्।
सा घण्टा पातु नो देवि पापेभ्योऽनः सुतानिव।। २७

असुरासृग्वसापङ्क-चर्चितस्ते करोज्ज्वलः।
शुभाय खड्गो भवतु चण्डिके त्वां नता वयम्।। २८

रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान् सकलानभीष्टान्।
त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति।। २९

एतत् कृतं यत् कदनं त्वयाद्य धर्मद्विषां देवि महासुराणाम्।
रूपैरनेकैर्बहुधाऽऽत्ममूर्तिं कृत्वांबिके तत् प्रकरोति कान्या।। ३०

विद्यासु शास्त्रेषु विवेकदीपेष्वाद्येषु वाक्येषु च का त्वदन्या।
ममत्वगर्तेऽति-महान्धकारे विभ्रामयत्येतदतीव विश्वम्।। ३१

रक्षांसि यत्रोग्र-विषाश्च नागा यत्रारयो दस्युबलानि यत्र।
दावानलो यत्र तथाब्धिमध्ये तत्र स्थिता त्वं परिपासि विश्वम्।। ३२

विश्वेश्वरि त्वं परिपासि विश्वं विश्वात्मिका धारयसीति विश्वम्।
विश्वेश-वन्द्या भवती भवन्ति विश्वाश्रया ये त्वयि भक्ति नम्राः।। ३३

देवि प्रसीद परिपालय नोऽरिभीतेः नित्यं यथासुर-वधादधुनैव सद्यः।
पापानि सर्वजगतां प्रशमं नयाशु उत्पातपाकजनितांश्च महोपसर्गान् ।।
३४

प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि।
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव।। ३५

देव्युवाच।। ३६

वरदाहं सुरगणा वरं यन्मनसेच्छत ।
तं वृणुध्वं प्रयच्छामि जगतामुपकारकम्।। ३७

देवा ऊचुः।। ३८

सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि।
एवमेव त्वया कार्यमस्मद्वैरि-विनाशनम्।। ३९

देव्युवाच।। ४०

वैवस्वतेऽन्तरे प्राप्ते अष्टाविंशतिमे युगे।
शुंभो निशुंभश्चैवान्यावुत्पत्स्येते महासुरौ।। ४१

नन्दगोप-गृहे जाता यशोदा-गर्भ-संभवा।
ततस्तौ नाशयिष्यामि विन्ध्याचल-निवासिनी।। ४२

पुनरप्यतिरौद्रेण रूपेण पृथिवीतले।
अवतीर्य हनिष्यामि वैप्रचित्तांस्तु दानवान् ।। ४३

भक्षयन्त्याश्च तानुग्रान् वैप्रचित्तान् महासुरान्।
रक्ता दन्ता भविष्यन्ति दाडिमीकुसुमोपमाः।। ४४

ततो मां देवताः स्वर्गे मर्त्यलोके च मानवाः।
स्तुवन्तो व्याहरिष्यन्ति सततं रक्तदन्तिकाम्।। ४५

भूयश्च शतवार्षिक्यामनावृष्ट्यामनंभसि।
मुनिभिः संस्तुता भूमौ संभविष्याम्ययोनिजा।। ४६

ततः शतेन नेत्राणां निरीक्षिष्यामि यन्मुनीन्।
कीर्तयिष्यन्ति मनुजाः शताक्षीमिति मां ततः।। ४७

ततोऽहमखिलं लोकमात्मदेह-समुद्भवैः।
भरिष्यामि सुराः शाकैरावृष्टेः प्राणधारकैः।। ४८

शाकंभरीति विख्यातिं तदा यास्याम्यहं भुवि।। ४९

तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम्।
दुर्गा देवीति विख्यातं तन्मे नाम भविष्यति।। ५०

पुनश्चाहं यदा भीमं रूपं कृत्वा हिमाचले।
रक्षांसि भक्षयिष्यामि मुनीनां त्राणकारणात्।। ५१

तदा मां मुनयः सर्वेस्तोष्यन्त्यानम्र-मूर्तयः।
भीमा देवीति विख्यातं तन्मे नाम भविष्यति।। ५२

यदारुणाख्यस्त्रैलोक्ये महाबाधां करिष्यति।
तदाहं भ्रामरं रूपं कृत्वाऽसंख्येय-षट्पदम्।। ५३

त्रैलोक्यस्य हितार्थाय वधिष्यामि महासुरम्।
भ्रामरीति च मां लोकास्तदा स्तोष्यन्ति सर्वतः।। ५४

इत्थं यदा यदा बाधा दानवोत्था भविष्यति।
तदा तदावतीर्याहं करिष्याम्यरिसंक्षयम्।। ओं।। ५५(६३०)

।। ओं इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये एकादशोऽध्यायः।।

आहुतिः ओं क्लीं जयन्ती सांगायै सायुधायै सशक्तिकायै सपरिवारायै सवाहनायै सर्व नारायण्यै महाहुतिं समर्पयामि नमः स्वाहा ।।

द्वादशोऽध्यायः

# फलस्तुतिः

।।ध्यानम्।।

ओं विद्युद्दाम-समप्रभां मृगपति-स्कन्धस्थितां भीषणां
कन्याभिः करवाल-खेट-विलसद्धस्ताभिरासेविताम्।
हस्तैश्चक्र-गदासि-खेट-विशिखांश्चापं गुणं तर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे।।

ओं देव्युवाच।। १ (६३१)

एभिः स्तवैश्च मां नित्यं स्तोष्यते यः समाहितः।
तस्याहं सकलां बाधां नाशयिष्याम्यसंशयम्।। २

मधुकैटभनाशं च महिषासुर-घातनम्।
कीर्तयिष्यन्ति ये तद्वद् वधं शुंभ-निशुंभयोः।। ३

अष्टम्यां  च चतुर्दश्यां नवम्यां चैकचेतसः।
श्रोष्यन्ति चैव ये भक्त्या मम माहात्म्यमुत्तमम्।। ४

न तेषां दुष्कृतं किंचिद् दुष्कृतोत्था न चापदः।
भविष्यति न दारिद्र्यं न चैवेष्ट-वियोजनम्।। ५

शत्रुतो न भयं  तस्य दस्युतो वा न राजतः।
न शस्त्रानल-तोयौघात् कदाचित् संभविष्यति।। ६

तस्मान्ममैतन्माहात्म्यं पठितव्यं समाहितैः।
श्रोतव्यं च सदा भक्त्या परं स्वस्त्ययनं हि तत्।। ७

उपसर्गानशेषांस्तु महामारी-समुद्भवान्।
तथा त्रिविधमुत्पातं माहात्म्यं शमयेन्मम।। ८

यत्रैतत् पठ्यते सम्यङ् नित्यमायतने मम।
सदा न तद्विमोक्ष्यामि सान्निध्यं तत्र मे स्थितम्।। ९

बलिप्रदाने पूजायामग्निकार्ये महोत्सवे।
सर्वं ममैतच्चरितमुच्चार्यं श्राव्यमेव च।। १०

जानताऽजानता वापि बलिपूजां तथा कृताम्।
प्रतीच्छिष्याम्यहं प्रीत्या वह्निहोमं तथा कृतम्।। ११

शरत्काले महापूजा क्रियते या च वार्षिकी।
तस्यां ममैतन्माहात्म्यं श्रुत्वा भक्ति-समन्वितः।। १२

सर्वाबाधा-विनिर्मुक्तो धन-धान्य-सुतान्वितः।
मनुष्यो मत्प्रसादेन भविष्यति न संशयः।। १३

श्रुत्वा ममैतन्माहात्म्यं तथा चोत्पत्तयः शुभाः।
पराक्रमं च युद्धेषु जायते निर्भयः पुमान्।। १४

रिपवः संक्षयं यान्ति कल्याणं चोपपद्यते।
नन्दते च कुलं पुंसां माहात्म्यं मम श्रृण्वताम्।। १५

शान्ति-कर्मणि सर्वत्र तथा दुःस्वप्न-दर्शने।
ग्रहपीडासु चोग्रासु माहात्म्यं श्रृणुयान्मम।। १६

उपसर्गाः शमं यान्ति ग्रहपीडाश्च दारुणाः।
दुः स्वप्नं च नृभिर्दृष्टं सुस्वप्नमुपजायते।। १७

बालग्रहाभिभूतानां बालानां शान्ति-कारकम्।
संघात-भेदे च नृणां मैत्रीकरणमुत्तमम्।। १८

दुर्वृत्तानामशेषाणां बलहानिकरं परम्।
रक्षो-भूत-पिशाचानां पठनादेव नाशनम्।। १९

सर्वं ममैतन्माहात्म्यं मम सन्निधि-कारकम्।। २०

पशु-पुष्पार्घ्य-धूपैश्च गन्ध दीपैस्तथोत्तमैः।
विप्राणां भोजनैर्होमैः प्रोक्षणीयैरहर्निशम्।। २१

अन्यैश्च विविधैर्भोगैः प्रदानैर्वत्सरेण या।
प्रीतिर्मे क्रियते सास्मिन् सकृत् सुचरिते श्रुते।। २२

श्रुतं हरति पापानि तथाऽऽरोग्यं प्रयच्छति।
रक्षां करोति भूतेभ्यो जन्मनां कीर्तनं मम।। २३

युद्धेषु चरितं यन्मे दुष्ट-दैत्य-निबर्हणम्।
तस्मिञ्छ्रुते वैरि-कृतं भयं पुंसां न जायते।। २४

युष्माभिः स्तुतयो याश्च याश्च ब्रह्मर्षिभिः कृताः।
ब्रह्मणा च कृतास्तास्तु प्रयच्छन्ति शुभां मतिम्।। २५

अरण्ये प्रान्तरे वापि दावाग्नि-परिवारितः।
दस्युभिर्वा वृतः शून्ये गृहीतो वापि शत्रुभिः।। २६

सिंहव्याघ्रानुयातो वा वने वा वनहस्तिभिः।
राज्ञा क्रुद्धेन चाज्ञप्तो वध्यो बन्धगतोऽपि वा।। २७

आघूर्णितो वा वातेन स्थितः पोते महार्णवे।
पतत्सु चापि शस्त्रेषु संग्रामे भृशदारुणे।। २८

सर्वबाधासु घोरासु वेदनाभ्यर्दितोऽपि वा।
स्मरन् ममैतच्चरितं नरो मुच्येत सङ्कटात्।। २९

मम प्रभावात् सिंहाद्या दस्यवो वैरिणस्तथा।
दूरादेव पलायन्ते स्मरतश्चरितं मम।। ३०

ऋषिरुवाच।। ३१

इत्युक्त्वा सा भगवती चण्डिका चण्डविक्रमा।
पश्यतामेव देवानां तत्रैवान्तरधीयत।। ३२

तेऽपि देवा निरातङ्काः स्वाधिकारान् यथा पुरा।
यज्ञभागभुजः सर्वे चक्रुर्विनिहतारयः।। ३३

दैत्याश्च देव्या निहते शुंभे देवरिपौ युधि।
जगद्विध्वंसिनि तस्मिन् महोग्रेऽतुलविक्रमे।। ३४
निशुंभे च महावीर्ये शेषाः पातालमाययुः।। ३५

एवं भगवती देवी सा नित्यापि पुनः पुनः।
संभूय कुरुते भूप जगतः परिपालनम्।। ३६

तयैतन्मोह्यते विश्वं सैव विश्वं प्रसूयते।
सा याचिता च विज्ञानं तुष्टा ऋद्धिं प्रयच्छति।। ३७

व्याप्तं तयैतत् सकलं ब्रह्माण्डं मनुजेश्वर।
महाकाल्या महाकाली(काले) महामारी स्वरूपया।। ३८

सैव काले महामारी सैव सृष्टिर्भवत्यजा।
स्थितिं करोति भूतानां सैव काले सनातनी।। ३९

भवकाले नृणां सैव लक्ष्मीर्वृद्धिप्रदा गृहे।
सैवाऽभावे तथाऽलक्ष्मीर्विनाशायोपजायते।। ४०

स्तुता संपूजिता पुष्पैर्धूपगन्धादिभिस्तथा।
ददाति वित्तं पुत्रांश्च मतिं धर्मे गतिं शुभाम्।।ओं।। ४१(६७१)

।। ओं इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये द्वादशोऽध्यायः।।

आहुतिः ओं क्लीं जयन्ती सांगायै सायुधायै सशक्तिकायै सपरिवारायै सवाहनायै वरप्रदायै बालात्रिपुरसुन्दर्यै महाहुतिं समर्पयामि नमः स्वाहा॥

## त्रयोदशोऽध्यायः

# वरप्रदानम्

।।ध्यानम्।।

ओं बालार्कमण्डलाभासां चतुर्बाहुं त्रिलोचनाम्।
पाशांकुश-वराभीतीर्धारयन्तीं शिवां भजे।।

ओं ऋषिरुवाच।। १ (६७२)

एतत्ते कथितं भूप देवी-माहात्म्यमुत्तमम्।। २

एवं प्रभावा सा देवी ययेदं धार्यते जगत्।
विद्या तथैव क्रियते भगवद्विष्णु-मायया।। ३

तया त्वमेष वैश्यश्च तथैवान्ये विवेकिनः।
मोह्यन्ते मोहिताश्चैव मोहमेष्यन्ति चापरे।। ४

तामुपैहि महाराज शरणं परमेश्वरीम्।
आराधिता सैव नृणां भोगस्वर्गापवर्गदा।। ५

मार्कण्डेय उवाच।। ६

इति तस्य वचः श्रुत्वा सुरथः स नराधिपः।
प्रणिपत्य महाभागं तमृषिं शंसित-व्रतम्।। ७

निर्विण्णोऽति-ममत्वेन राज्यापहरणेन च।
जगाम सद्यस्तपसे स च वैश्यो महामुने ।। ८

संदर्शनार्थमंबाया नदी-पुलिन-संस्थितः।।

स च वैश्यस्तपस्तेपे देवीसूक्तं परं जपन्। ९

तौ तस्मिन् पुलिने देव्याः कृत्वा मूर्तिं महीमयीम्।।

अर्हणां चक्रतुस्तस्याः पुष्प-धूपाग्नि-तर्पणैः। १०

निराहारौ यताहारौ तन्मनस्कौ समाहितौ।।

ददतुस्तौ बलिं चैव निजगात्रासृगुक्षितम्। ११

एवं समाराधयतो-स्त्रिभिर्वर्षैर्यतात्मनोः।।

परितुष्टा जगद्धात्री प्रत्यक्षं प्राह चण्डिका।। १२

देव्युवाच।। १३

यत्प्रार्थ्यते त्वया भूप त्वया च कुलनन्दन।
मत्तस्तत् प्राप्यतां सर्वं परितुष्टा ददामि वाम्।। १४

मार्कण्डेय उवाच।। १५

ततो वव्रे नृपो राज्यमविभ्रंशयन्य जन्मनि।
अत्रैव च निजं राज्यं हतशत्रुबलं बलात् ।। १६

सोऽपि वैश्यस्ततो ज्ञानं वव्रे निर्विण्ण-मानसः।
ममेत्यहमिति प्राज्ञः सङ्ग-विच्युति-कारकम्।। १७

देव्युवाच।। १८

स्वल्पैरहोभिर्नृपते स्वं राज्यं प्राप्स्यते भवान्।। १९

हत्वा रिपूनस्खलितं तव तत्र भविष्यति।। २०

मृतश्च भूयः संप्राप्य जन्म देवाद्विवस्वतः।। २१

सावर्णिको नाम मनुर्ना भवान् भुवि भविष्यति।। २२

वैश्यवर्य त्वया यश्च वरोऽस्मत्तोऽभिवाञ्छितः।। २३

तं प्रयच्छामि संसिद्ध्यै तव ज्ञानं भविष्यति।। २४

मार्कण्डेय उवाच ।। २५

इति दत्त्वा तयोर्देवी यथाभिलषितं वरम्।।
बभूवान्तर्हिता सद्यो भक्त्या ताभ्यामभिष्टुता (2 times) २६–२७

एवं देव्या वरं लब्ध्वा सुरथः क्षत्रियर्षभः।। (2 times)
सूर्याज्जन्म समासाद्य सावर्णिर्भविता मनुः।।
क्लीं ओं २८-२९(७००)

।। ओं इति श्रीमार्कण्डेयपुराणे सावर्णिके मन्वन्तरे देवीमाहात्म्ये त्रयोदशोऽध्यायः।।

आहुतिः ओं क्लीं जयन्ती सांगायै सायुधायै सशक्तिकायै सपरिवारायै सवाहनायै श्रीमहात्रिपुरसुन्दर्यै श्रीविद्यायै महाहुतिं समर्पयामि नमः स्वाहा॥

## उत्तरन्यासः

ओं ह्रीं हृदयाय नमः । ओं चं शिरसे स्वाहा ।
ओं डिं शिखायै वषट् । ओं कां कवचाय हुं ।
ओं यैं नेत्रत्रयाय वौषट् । ओं ह्रीं चण्डिकायै अस्त्राय फट् ।।

ओं खड्गिनी शूलिनी घोरा गदिनी चक्रिणी तथा ।

शङ्खिनी चापिनी बाणभुशुण्डीपरिघायुधा ।। हृदयाय नमः ।

ओं शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके ।

घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ।। शिरसे स्वाहा ।

ओं प्राच्यां रक्ष प्रतीच्यां च चण्डिके रक्ष दक्षिणे।

भ्रामणेनात्मशूलस्य उत्तरस्यां तथेश्वरि ।। शिखायै वषट् ।

ओं सौम्यानि यानि रूपाणि त्रैलोक्ये विचरन्ति ते।

यानि चात्यर्थघोराणि तै रक्षास्मांस्तथा भुवम् ।। कवचाय हुम् ।

ओं खड्गशूलगदादीनि यानि चास्त्राणि तेऽम्बिके ।

करपल्लवसङ्गीनि तैरस्मान् रक्ष सर्वतः ।। नेत्रत्रयाय वौषट् ।

ओं सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते।

भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तुते ।। अस्त्राय फट् ।

भूर्भुवस्सुवरोमिति दिग्विमोकः

## ध्यानम्

ओं विद्युद्दामसमप्रभां मृगपतिस्कन्धस्थितां भीषणां
कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम् ।
हस्तैश्चक्रगदासिखेटविशिखांश्चापं गुणं तर्जनीं
बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे ।।

इति ध्यानम्

# ऋग्वेदीय देवी सूक्तम्

॥ न्यासः॥

अस्य श्री अहमित्यष्टर्चस्य सूक्तस्य वागांभृणी ऋषिः, सच्चित् सुखात्मकः सर्वगतः परमात्मा देवता, द्वितीयाया ऋचो जगती, शिष्टानां त्रिष्टुप् छन्दः। सप्तशती जपान्ते जपे विनियोगः॥

## ध्यानम्

ओं सिंहस्था शशिशेखरा मरकतप्रख्यैश्चचतुर्भिर्भुजैः
शङ्खं चक्रधनुः शरांश्च दधती नेत्रैस्त्रिभिः शोभिता।
आमुक्ताङ्गदहारकङ्कणरणत्काञ्चीरणन्नूपुरा
दुर्गादुर्गतिहारिणी भवतु नो रत्नोल्लसत्कुण्डला ॥

## ॥ सूक्तम् ॥

ओं॥ अहं रुद्रेभिर्वसुभिश्चराम्यह-मादित्यैरुत विश्वदेवैः।
अहं मित्रावरुणोभा बिभर्म्यहमिन्द्राग्नी अहमश्विनोभा॥ १

अहं सोममाहनसं बिभर्म्यहं त्वष्टारमुतपूषणं भगम्।
अहं दधामि द्रविणं हविष्मते सुप्राव्ये यजमानाय सुन्वते॥ २

अहं राष्ट्री-संगमनी- वसूनां चिकितुषी प्रथमा यज्ञियानाम्।
तां मा देवा व्यदधुः पुरुत्रा भूरिस्थात्रां भूर्या वेशयन्तीम्॥ ३

मयासो अन्नमत्ति यो विपश्यति यः प्राणिति य ईंश्रृणोत्युक्तम्।
अमन्तवो मान्त उपक्षियन्ति श्रुधि श्रुत श्रद्धिवन्तं वदामि।। ४

अहमेव स्वयमिदं वदामि जुष्टं देवेभि-रुत मानुषेभिः।
यं कामये तंतमुग्रं कृणोमि तं ब्रह्माणं तमृषिंतंसुमेधाम्।। ५

अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ।
अहं जनाय समदं कृणोम्यहं द्यावापृथिवी आविवेश।। ६

अहं सुवे पितरमस्य मूर्धन् मम योनिरप्स्वन्तः समुद्रे।
ततो वितिष्ठे भुवनानि विश्वोतामूं द्यां वर्ष्मणोपस्पृशामि।। ७

अहमेव वात इव प्रवाम्यारभमाणा भुवनानि विश्वा।
परो दिवा पर एनापृथिव्यै तावती महिमा संबभूव।। ८

इति ऋग्वेदीयं देवीसूक्तं समाप्तम्

# तान्त्रिकम् देवीसूक्तम्

नमो देव्यै महादेव्यै शिवायै सततं नमः।
नमः प्रकृत्यै भद्रायै नियताः प्रणताः स्म ताम्।।
रौद्रायै नमो नित्यायै गौर्यै धात्र्यै नमो नमः।
ज्योत्स्नायै चेन्दुरूपिण्यै सुखायै सततं नमः।।

कल्याण्यै प्रणतां वृद्ध्यै सिद्ध्यै कुर्मो नमो नमः।
नैर्ऋत्यै भूभृतां लक्ष्म्यै शर्वाण्यै ते नमो नमः।।
दुर्गायै दुर्गपारायै सारायै सर्वकारिण्यै।
ख्यात्यै तथैव कृष्णायै धूम्रायै सततं नमः।।
अति-सौम्याति-रौद्रायै नतास्तस्यै नमो नमः।
नमो जगत्प्रतिष्ठायै देव्यै कृत्यै नमो नमः।।
या देवी सर्वभूतेषु विष्णुमायेति शब्दिता।
नमस्तस्यै ।। नमस्तस्यै।। नमस्तस्यै नमो नमः।।
या देवी सर्वभूतेषु चेतनेत्यभिधीयते।
नमस्तस्यै।। नमस्तस्यै।। नमस्तस्यै नमो नमः।।

या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।

या देवी सर्वभूतेषु निद्रारूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।

या देवी सर्वभूतेषु क्षुधारूपेण संस्थिता ।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।

या देवी सर्वभूतेषुच्छायारूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।

या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै।। नमस्तस्यै नमो नमः ।।

या देवी सर्वभूतेषु तृष्णारूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै।। नमस्तस्यै नमो नमः।।
या देवी सर्वभूतेषु क्षान्ति-रूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु जातिरूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु लज्जारूपेण संस्थिता।
नमस्तस्यै।। नमस्तस्यै ।। नमस्तस्यै नमो नमः।।
या देवी सर्वभूतेषु शान्तिरूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।

या देवी सर्वभूतेषु श्रद्धारूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु कान्तिरूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु लक्ष्मीरूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।
या देवि सर्वभूतेषु वृत्तिरूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु स्मृतिरूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।

या देवी सर्वभूतेषु दयारूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु तुष्टि-रूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः।।
या देवी सर्वभूतेषु मातृरूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।
या देवी सर्वभूतेषु भ्रान्ति-रूपेण संस्थिता।
नमस्तस्यै ।। नमस्तस्यै ।। नमस्तस्यै नमो नमः ।।
इन्द्रियाणामधिष्ठात्री भूतानां चाखिलेषु या।
भूतेषु सततं तस्यै व्याप्तिदेव्यै नमो नमः।।

चितिरूपेण या कृत्स्नमेतद्-व्याप्य स्थिता जगत्।
नमस्तस्यै।। नमस्तस्यै।। नमस्तस्यै नमो नमः ।।

स्तुता सुरैः पूर्वमभीष्ट-संश्रयात्तथा सुरेन्द्रेण दिनेषु सेविता।
करोतु सा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापदः।।

या सांप्रतं चोद्धत-दैत्य-तापितैः अस्माभिरीशा च सुरैर्नमस्यते।
या च स्मृता तत्क्षणमेव हन्ति नः सर्वापदो भक्ति-विनम्र-मूर्तिभिः।।

इति तान्त्रिकम् देवीसूक्तम्

चण्डी नवार्णजपं ओं ह्रीं क्लीं चामुण्डाये विच्चे १०८ वारं कुर्यात्

# प्राधानिकम्-रहस्यम्

ओं अस्य श्री सप्तशतीरहस्यत्रस्य ब्रह्माविष्णुरुद्राऋषयः।
श्रीमहाकाली–महालक्ष्मी–महासरस्वत्यो देवताः। अनुष्टुब्छन्दः।
नवदुर्गा महालक्ष्मीर्बीजम् । श्रीं शक्तिः ।।
ममाभीष्टफलसिद्धये सप्तशतीपाठान्ते जपे विनियोगः।

राजोवाच।

भगवन्नवतारा मे चण्डिकायास्त्वयोदिताः।
एतेषां प्रकृतिं ब्रह्मन् प्रधानं वक्तुमर्हसि।। १

आराध्यं यन्मया देव्याः स्वरूपं येन च द्विज।
विधिना ब्रूहि सकलं यथावत् प्रणतस्य मे।। २

ऋषिरुवाच।।

इदं रहस्यं परममनाख्येयं प्रचक्षते।
भक्तोऽसीति न मे किंचित् तवावाच्यं नराधिप।। ३

सर्वस्याद्या महालक्ष्मीस्त्रिगुणा परमेश्वरी।
लक्ष्यालक्ष्य-स्वरूपा सा व्याप्य कृत्स्नं व्यवस्थिता।। ४

मातुलुङ्गं गदां खेटं पानपात्रं च बिभ्रती।
नागं लिंगं च योनिं च बिभ्रती नृप मूर्धनि।। ५

तप्त-कांचन-वर्णाभा तप्त-कांचन-भूषणा।
शून्यं तदखिलं स्वेन पूरयामास तेजसा।। ६

शून्यं तदखिलं लोकं विलोक्य परमेश्वरी।
बभार परमं रूपं तमसा केवलेन हि।। ७

सा भिन्नांजन-संकाशा दंष्ट्रांचित-(दंष्ट्रांकित) वरानना।
विशाल-लोचना नारी बभूव तनुमध्यमा।। ८

खड्ग-पात्र-शिरः खेटैरलंकृत-चतुर्भुजा।
कबन्धहारं शिरसा बिभ्राणाहि-शिरः स्त्रजम्।। ९

सा प्रोवाच महालक्ष्मीं  तामसी प्रमदोत्तमा।
नाम कर्म च मे मातर्देहि तुभ्यं नमो नमः।। १०

तां प्रोवाच महालक्ष्मीस्तामसीं प्रमदोत्तमाम्।
ददामि तव नामानि यानि कर्माणि तानि ते।। ११

महामाया महाकाली महामारी क्षुधा तृषा।
निद्रा तृष्णा चैकवीरा कालरात्रिर्दुरत्यया।। १२

इमानि तव नामानि प्रतिपाद्यानि कर्मभिः।
एभिः कर्माणि ते ज्ञात्वा योऽधीते सोऽश्नुते सुखम्।। १३

तामित्युक्त्वा महालक्ष्मीः स्वरूपमपरं नृप।
सत्त्वाख्येनातिशुद्धेन गुणेनेन्दुप्रभं दधौ।। १४

अक्षमालांकुशधरा वीणापुस्तक-धारिणी।
सा बभूव वरा नारी नामान्यस्यैव सा ददौ।। १५

महाविद्या महावाणी भारती वाक् सरस्वती।
आर्या ब्राह्मी कामधेनुर्वेदगर्भा सुरेश्वरी।। १६

अथोवाच महालक्ष्मीर्महाकालीं सरस्वतीम्।
युवां जनयतां देव्यौ मिथुने स्वानुरूपतः।। १७

इत्युक्त्वा ते महालक्ष्मीः ससर्ज मिथुनं स्वयम्।
हिरण्यगर्भौ रुचिरौ स्त्रीपुंसौ कमलासनौ।। १८

ब्रह्मन् विधे विरिंचेति धातरित्याह तं नरम्।
श्रीः पद्मे कमले लक्ष्मीत्याह माता च तां स्त्रियम्।। १९

महाकाली भारती च मिथुने सृजतः सह।
एतयोरपि रूपाणि नामानि च वदामि ते।। २०

नीलकण्ठं रक्तबाहुं श्वेताङ्गं चन्द्रशेखरम्।
जनयामास पुरुषं महाकाली सितां स्त्रियम्।। २१

स रुद्रः शंकरः स्थाणुः कपर्दी च त्रिलोचनः।
त्रयी विद्या कामधेनुः सा स्त्री भाषाक्षरा स्वरा।। २२

सरस्वतीं स्त्रियं गौरीं कृष्णं च पुरुषं नृप।
जनयामास नामानि तयोरपि वदामि ते।। २३

विष्णुः कृष्णो हृषीकेशो वासुदेवो जनार्दनः।
उमा गौरी सती चण्डी सुन्दरी सुभगा शिवा।। २४

एवं युवतयः सद्यः पुरुषत्वं प्रपेदिरे।
चक्षुष्मन्तो नु पश्यन्ति नेतरेऽतद्विदो जनाः।। २५

ब्रह्मणे प्रददौ पत्नीं महालक्ष्मीर्नृप-त्रयीम्।
रुद्राय गौरीं वरदां वासुदेवाय च श्रियम्।। २६

स्वरया सह संभूय विरिंच्योऽण्डमजीजनत्।
बिभेद भगवान् रुद्रस्तद् गौर्या सह वीर्यवान्।। २७

अण्डमध्ये प्रधानादि-कार्यजातमभून्नृप।
महाभूतात्मकं सर्वं जगत् स्थावर-जंगमम्।। २८

पुपोष पालयामास तल्लक्ष्म्या सह केशवः।
संजहार जगत् सर्वं सह गौर्या महेश्वरः।। २९

महालक्ष्मीर्महाराज सर्वसत्वमयीश्वरी।
निराकारा च साकारा सैव नानाभिधान-भृत्।
नामान्तरैर्निरूप्यैषा नाम्ना नान्येन कुत्रचित्।। ३०

इति-प्राधानिकम्-रहस्यं संपूर्णम्

# वैकृतिकम् -रहस्यम्

ऋषिरुवाच।।

त्रिगुणा तामसी देवी सात्त्विकी या त्वयोदिता।
सा शर्वा चण्डिका दुर्गा भद्रा भगवतीर्यते।। १

योगनिद्रा हरेरुक्ता महाकाली तमोगुणा।
मधुकैटभ-नाशार्थं यां तुष्टावांबुजासनः।। २

दशवक्त्रा दशभुजा दशपादांजनप्रभा।
विशालया राजमाना त्रिंशल्लोचन मालया।। ३

स्फुरद्दशनदंष्ट्रा सा भीमरूपापि भूमिप।
रूपसौभाग्यकान्तीनां सा प्रतिष्ठा महाश्रियः।। ४

खड्ग-बाण-गदा-शूल-चक्र-शंख-भुशुण्डि-भृत्।
परिघं कार्मुकं शीर्षं निश्च्योतद्रुधिरं दधौ।। ५

एषा सा वैष्णवी माया महाकाली दुरत्यया।
आराधिता वशीकुर्यात् पूजाकर्तुश्चराचरम्।। ६

सर्वदेव शरीरेभ्यो याऽऽविर्भूताऽमितप्रभा।
त्रिगुणा सा महालक्ष्मीः साक्षान्महिषमर्दिनी।। ७

श्वेतानना नीलभुजा सुश्वेत-स्तन-मण्डला।
रक्तमध्या रक्तपादा नीलजंघोरु-रुन्मदा।। ८

सुचित्र-जघना चित्र-माल्यांबर-विभूषणा।
चित्रानुलेपना कान्तिरूप-सौभाग्य-शालिनी।। ९

अष्टादशभुजा पूज्या सा सहस्त्रभुजा सती।
आयुधान्यत्र वक्ष्यन्ते दक्षिणाधः करक्रमात्।। १०

अक्षमाला च कमलं बाणोऽसिः कुलिशं गदा।
चक्रं त्रिशूलं परशुः शंखो घण्टा च पाशकः।। ११

शक्तिर्दण्डश्चर्म -चापं पानपात्रं कमण्डलुः।
अलंकृत-भुजामेभिरायुधैः कमलासनाम्।। १२

सर्वदेवमयीमीशां महालक्ष्मीमिमां नृप।
पूजयेत्-सर्वलोकानां स देवानां प्रभुर्भवेत्।। १३

गौरीदेहात् समुद्भूता या सत्त्वैक-गुणाश्रया।
साक्षात् सरस्वती प्रोक्ता शुंभासुर-निबर्हिणी।। १४

दधौ चाष्टभुजा बाणमुसले शूलचक्रभृत्।
शंखं घण्टां लांगलं च कार्मुकं वसुधाधिप।। १५

एषा संपूजिता भक्त्या सर्वज्ञत्वं प्रयच्छति।
निशुंभ-मथिनी देवी शुंभासुर-निबर्हिणी।। १६

इत्युक्तानि स्वरूपाणि मूर्तीनां तव पार्थिव।
उपासनं जगन्मातुः पृथगासां निशामय।। १७

महालक्ष्मीर्यदा पूज्या महाकाली सरस्वती।
दक्षिणोत्तरयोः पूज्ये पृष्ठतो मिथुन-त्रयम्।। १८

विरञ्चिः स्वरया मध्ये रुद्रो गौर्या च दक्षिणे।
वामे लक्ष्म्या हृषीकेशः पुरतो देवता- त्रयम्।। १९

अष्टादशभुजा मध्ये वामे चास्या दशानना ।
दक्षिणेऽष्टभुजा लक्ष्मीर्महतीति समर्चयेत् ।। २०

अष्टादशभुजा चैषा यदा पूज्या नराधिप।
दशानना चाष्टभुजा दक्षिणोत्तरयोस्तदा।। २१

कालमृत्यू च संपूज्यौ सर्वारिष्ट-प्रशान्तये।
यदा चाष्टभुजा पूज्या शुंभासुर-निबर्हिणी।। २२

नवास्याः शक्तयः पूज्यास्तथा रुद्र-विनायकौ।
नमो देव्या इति स्तोत्रैर्महालक्ष्मीं समर्चयेत्।। २३

अवतार-त्रयार्चायां स्तोत्रमन्त्रास्तदाश्रयाः।
अष्टादशभुजा चैषा पूज्या महिषमर्दिनी।। २४

महालक्ष्मीर्महाकाली सैव प्रोक्ता सरस्वती।
ईश्वरी पुण्यपापानां सर्वलोकमहेश्वरी।। २५

महिषान्तकरी येन पूजिता स जगत्प्रभुः।
पूजयेज्जगतां धात्रीं चण्डिकां भक्तवत्सलाम्।। २६

अर्घ्यादिभिरलंकारैर्गन्धपुष्पैस्तथाक्षतैः।
धूपैर्दीपैश्च नैवेद्यैर्नाना-भक्ष्य-समन्वितैः।। २७

रुधिराक्तेन बलिना मांसेन सुरया नृप।
(बलिमांसादिपूजेयं विप्रवर्ज्या मयेरिता।
तेषां किल सुरामांसैर्नोक्ता पूजा नृप क्वचित्।)
प्रणामाचमनीयेन चन्दनेन सुगन्धिना।। २८

सकर्पूरैश्च तांबुलैर्भक्तिभाव-समन्वितैः।
वामभागेऽग्रतो देव्यास्छिन्नशीर्षं महासुरम्।। २९

पूजयेन्महिषं येन प्राप्तं सायुज्यमीशया।
दक्षिणे पुरतः सिंहं समग्रं धर्ममीश्वरम्।। ३०

वाहनं पूज्येद्देव्या धृतं येन चराचरम्।
कुर्याच्च स्तवनं धीमांस्तस्या एकाग्र-मानसः।। ३१

ततः कृतांजलिर्भूत्वा स्तुवीत चरितैरिमैः।
एकेन वा मध्यमेननैकेनेतरयोरिह।। ३२

चरितार्धं तु न जपेज्जपञ्छिद्रमवाप्नुयात्।
प्रदक्षिणनमस्कारान् कृत्वा मूर्ध्नि कृतांजलिः।। ३३

क्षमापयेज्जगद्धात्रीं मुहुर्मुहुरतन्द्रितः।
प्रतिश्लोकं च जुहुयात् पायसं तिल-सर्पिषा।। ३४

जुहुयात् स्तोत्र-मन्त्रैर्वा चण्डिकायै शुभं हविः।

भूयो नामपदैर्देवीं पूजयेत् सुसमाहितः।। ३५

प्रयतः प्रांजलिः प्रह्वः प्रणम्यारोप्य चात्मनि।
सुचिरं भावयेदीशां चण्डिकां तन्मयो भवेत्।। ३६

एवं यः पूजयेद् भक्त्या प्रत्यहं परमेश्वरीम्।
भुक्त्वा भोगान् यथा-कामं देवी-सायुज्यमाप्नुयात्।। ३७

यो न पूजयते नित्यं चण्डिकां भक्तवत्सलाम्।
भस्मीकृत्यास्य पुण्यानि निर्दहेत् परमेश्वरी।। ३८

तस्मात् पूजय भूपाल सर्वलोकमहेश्वरीम्।
यथोक्तेन विधानेन चण्डिकां सुखमाप्स्यसि।। ३९

इति वैकृतिकम् रहस्यं संपूर्णम्

# मूर्ति-रहस्यम्

ऋषिरुवाच।

नन्दा भगवती नाम या भविष्यति नन्दजा।
सा स्तुता पूजिता ध्याता वशीकुर्याज्जगत्त्रयम्।। १

कनकोत्तम-कान्तिः सा सुकान्ति-कनकांबरा।
देवी कनकवर्णाभा कनकोत्तम-भूषणा।। २

कमलांकुश-पाशाब्जैरलंकृत-चतुर्भुजा।
इन्दिरा कमला लक्ष्मीः सा श्री रुक्मांबुजासना।। ३

या रक्तदन्तिका नाम देवी प्रोक्ता मयानघ।
तस्याः स्वरूपं वक्ष्यामि श्रृणु सर्वभयापहम्।। ४

रक्तांबरा रक्तवर्णा रक्त-सर्वांग-भूषणा।
रक्तायुधा रक्तनेत्रा रक्तकेशातिभीषणा।। ५

रक्ततीक्ष्ण-नखा रक्तदशना रक्तदन्तिका।
पतिं नारीवानुरक्ता देवी भक्तं भजेज्जनम्।। ६

वसुधेव विशाला सा सुमेरु-युगल-स्तनी।
दीर्घौ लंबावतिस्थूलौ तावतीव मनोहरौ।। ७

कर्कशावतिकान्तौ तौ सर्वानन्द-पयोनिधी।
भक्तान् संपाययेद्देवी सर्वकामदुधौ स्तनौ।। ८

खड्गं पात्रं च मुसलं लांगलं च बिभर्ति सा।
आख्याता रक्तचामुण्डा देवी योगीश्वरीति च।। ९

अनया- व्याप्तमखिलं जगत् स्थावर-जंगमम्।
इमां यः पूजयेद् भक्त्या स व्याप्नोति चराचरम्।। १०

(भुक्त्वा भोगान् यथाकामं देवीसायुज्यमाप्नुयात् ।)
अधीते य इमं नित्यं रक्तदन्त्या वपुः स्तवम्।
तं सा परिचरेद्देवी पतिं प्रियमिवांगना।। ११

शाकंभरी नीलवर्णा नीलोत्पल-विलोचना।
गंभीर-नाभि-स्त्रिवली-विभूषित-तनूदरी।। १२

सुकर्कश-समोत्तुंग-वृत्त-पीन-घनस्तनी।
मुष्टिं शिलीमुखापूर्णं कमलं कमलालया।। १३

पुष्प-पल्लव-मूलादि फलाढ्यं शाक-संचयम्।
काम्यानन्त-रसैर्युक्तं क्षुत्तृणमृत्यु-भयापहम्।। १४

कार्मुकं च स्फुरत्कान्ति बिभ्रती परमेश्वरी।
शाकंभरी शताक्षी सा सैव दुर्गा प्रकीर्तिता।। १५

विशोका दुष्टदमनी शमनी दुरितापदाम्।
उमा गौरी सती चण्डी कालिका सापि पार्वती।। १६

शाकंभरीं स्तुवन् ध्यायन् जपन् संपूजयन्नमन्।
अक्षय्यमश्नुते शीघ्रमन्नपानामृतं फलम्।। १७

भीमापि नीलवर्णा सा दंष्ट्रादशन-भासुरा।
विशाल-लोचना नारी वृत्त-पीन-पयोधरा।। १८

चन्द्रहासं च डमरु पानपात्रं च बिभ्रती।
एकवीरा कालरात्रिः सैवोक्ता कामदा स्तुता।। १९

तेजोमण्डल-दुर्दर्शा भ्रामरी चित्रकान्ति-भृत्।
चित्रानुलेपना देवी चित्राभरण-भूषिता।। २०

चित्रभ्रमरसंकाशा महामारीति गीयते।
इत्येता मूर्तयो देव्या व्याख्याता वसुधाधिप।। २१

जगन्मातुश्चण्डिकायाः कीर्तिताः कामधेनवः।
इदं रहस्यं परमं न वाच्यं यस्य कस्यचित् ।। २२

आख्यानं दिव्यमूर्तीनामधीष्वावहितः स्वयम्।
(तस्मात् सर्वप्रयत्नेन देवीं जप निरन्तरम्।। २३

सप्तजन्मार्जितैर्घोरैर्ब्रह्महत्या-समैरपि।
पाठमात्रेण मन्त्राणां मुच्यते सर्वकिल्बिषैः।।) २४

देव्या ध्यानं तवाख्यातं गुह्याद्-गुह्यतरं महत्।
तस्मात् सर्वप्रयत्नेन सर्वं कामफलप्रदम्।। २५

(एतस्यास्त्वं प्रसादेन सर्वमान्यो भविष्यसि।
सर्वरूपमयी देवी सर्वं देवीमयं जगत् ।
अतोऽहं विश्वरूपां तां नमामि परमेश्वरीम् ।)

इति मूर्त्ति रहस्यं संपूर्णम्

## उत्तरविधि

ओं श्रीं क्लीं ह्रीं सप्तशतीचंडिके उत्कीलनं कुरु कुरु स्वाहा ।। (2 times)

पुस्तक / यन्त्रस्थदेवतां पुनः मूलमन्त्रेण पञ्चोपचार पूजां (नैवेद्यादिभिःयथाशक्ति) कुर्यात् ।

## क्षमा-प्रार्थना

अपराधसहस्राणि क्रियन्तेऽहर्निशं मया।
दासोऽयमिति मां मत्वा क्षमस्व परमेश्वरि।। १

आवाहनं न जानामि न जानामि विसर्जनम्।
पूजां चैव न जानामि क्षम्यतां परमेश्वरि।। २

मन्त्रहीनं क्रियाहीनं भक्तिहीनं सुरेश्वरि।
यत्पूजितं मया देवि परिपूर्णं तदस्तु मे।। ३

अपराधशतं कृत्वा जगदम्बेति योच्चरेत्।
यां गतिं समवाप्नोति न तां ब्रह्मादयः सुराः।। ४

सापराधोऽस्मि शरणं प्राप्तस्त्वां जगदम्बिके।
इदानीमनुकम्प्योऽहं यथेच्छसि तथा कुरु।। ५

अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं कृतम्।
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि।। ६

कामेश्वरि जगन्मातः सच्चिदानन्दविग्रहे।
गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि।। ७

गुह्यातिगुह्य-गोप्त्री त्वं गृहाणास्मत्कृतं जपम्।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि।। ८

।। श्री दुर्गार्पणमस्तु।।

# चण्डी आवरण पूजा विधिः

## ।। सप्तशती-यन्त्रपूजनम् ।।

आचम्य ।।

शुक्लाम्बरधरं विष्णुं शशिवर्णं चतुर्भुजम् ।
प्रसन्नवदनं ध्यायेत् सर्वविघ्नोपशान्तये ।।

प्राणानायम्य ।।

ममोपात्त-समस्त-दुरितक्षयद्वारा श्रीदुर्गा-लक्ष्मी-
सरस्वती-प्रीत्यर्थं सप्तशती-यन्त्रपूजां करिष्ये ।।

आब्रह्मलोकादशेषादालोकालोक-पर्वतात् ।
ये वसन्ति द्विजा देवास्तेभ्यो नित्यं नमो नमः ।।

आसन मन्त्रः

अस्य श्री आसनमहामंत्रस्य पृथिव्या मेरुपृष्ठ ऋषिः । सुतलं छन्दः । कूर्मो देवता ।। आसने विनियोगः ।।

पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता ।
त्वं च धारय मां देवि पवित्रं चासनं कुरु ।।

घण्टापूजनम्ः- जयध्वनि मन्त्रमातः स्वाहा । घण्टानादं कृत्वा ।।

दीपपूजाः दीपदेवि महादेवि शुभं भवतु मे सदा ।

यावत् पूजा–समाप्तिः स्यात् तावत् प्रज्वल सुस्थिरा ।।

नवाक्षरीजपं कृत्वा ।।

कलशपूजा ।। अग्निमण्डलाय नमः ।। आदित्यमण्डलाय नमः । सोममण्डलाय नमः ।।

गंगे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन् सन्निधिं कुरु ।। मूलमन्त्रेणाभिमन्त्र्य । पूजोपकरणानि द्रव्याणि आत्मानं च प्रोक्ष्य ।।

शंखपूजा ।। अग्निमण्डलाय नमः । आदित्यमण्डलाय नमः । सोममण्डलाय नमः ।।

त्वं पूरा सागरोत्पन्नो विष्णुना विधृतः करे।
देवैश्च पूजितः सर्वैः पांचजन्य नमोस्तु ते।।

पूजोपकरणानि द्रव्याणि आत्मानं च प्रोक्ष्य।।

विशेषार्घ्यम् ।। अग्निमण्डलाय नमः। आदित्यमण्डलाय नमः। सोममण्डलाय नमः।।

सबिन्दुरकारादि–क्षकारान्तं क्षकाराद्यकारान्तं मातृकया अर्पितेन अमृतेन आपूर्य। मूलेन सप्तवारमभिमन्त्र्य। पूजोपकरणानि प्रोक्ष्य।।

'ओं जुं सः स्वाहा' इति अष्टवारमभिमन्त्र्य। आत्मपात्रे किंचिद्विशेषार्घ्यामृतं उद्धृत्य कुण्डलिन्यधिष्ठितं चिदग्निमण्डलं ध्यात्वा।।

इतः पूर्वं प्राण–बुद्धि–देह–धर्माधिकारतः जाग्रत्स्वप्न–सुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यां–उदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा ।। इति आत्मनः कुण्डलिनी रूपे चिदग्नौ होमबुद्ध्या जुहुयात् ।।

पीठपूजा ।। ओं सकलगुणात्मशक्तियुक्ताय योगपीठात्मने नमः । ओं आधारशक्त्यै नमः । ओं मूलप्रकृत्यै नमः । ओं आदिवराहाय नमः । ओं आदिकूर्माय नमः । ओं अनन्ताय नमः । ओं पृथिव्यै नमः। ओं आदित्यादि नवग्रहदेवताभ्यो नमः । ओं दशदिक्पालकेभ्यो नमः ।।

यन्त्रे मूलेन मूर्तिं विचिन्त्य । आत्मानं कामकलारूपं विभाव्य ।

मूलाधारात् कुण्डलिनीं ब्रह्मरन्ध्रपथा शिरस्थां विभाव्य तत्रत्या
अमृतलोलीभूतां हृदयस्थ–अष्टदल–रक्त–पंकजे आनीय देवीं ध्यायेत् ।।

खड्गं–चक्र–गदेषु–चाप–परिघाञ्छूलं भुशुण्डीं शिरः
शङ्खं संदधतीं करैस्त्रिनयनां सर्वाङ्गभूषावृताम् ।
नीलाश्म–द्युतिमास्य–पाददशकां सेवे महाकालिकां
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम् ।।१ ।।

अक्षस्त्रक्परशुं गदेषु–कुलिशं पद्मं धनुष्कुण्डिकां
दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ।
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां
सेवे सैरिभ–मर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ।।२ ।।

घण्टाशूल–हलानि शङ्ख–मुसले चक्रं धनुः सायकं
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशु–तुल्यप्रभाम् ।
गौरी देह– समुद्भवां त्रिजगतामाधारभूतां महा–
पूर्वामत्र सरस्वतीमनुभजे शुम्भादि–दैत्यार्दिनीम् ।। ३।।

(यमिति बीजेन वामनासया करपुष्पे समारोप्य।)

मूलं। देवेशि भक्तसुलभे परिवारसमन्विते।
यावत् त्वां पूजयिष्यामि तावद्देवि इहावह ।।
आत्मसंस्थामजां शुद्धां त्वामहं परमेश्वरि।
आरण्यामिव हव्याशं मूर्तावावाहयाम्यहम् ।।४।।

आसनं समर्पयामि ।

पाद्यं समर्पयामि

अर्घ्यं समर्पयामि

आचमनीयं समर्पयामि

स्नानं । वस्त्रम् । यज्ञोपवीतम् । भूषणम् । गन्धम् । अक्षतान् ।
पुष्पाणि ।। ५ ।।

(पुष्पांजलिमादाय ।) संविन्मये परे देवि परामृतरुचिप्रिये ।
अनुज्ञां चण्डिके देहि परिवारार्चनाय मे ।।६।।

दिव्यौघ–सिद्धौघ–मानवौघेभ्यो नमः ।। स्वरूपनिरूपणहेतवे श्रीगुरवे नमः । अमुकानन्दनाथ श्रीपादुकां पूजयामि तर्पयामि नमः ।। स्वच्छप्रकाश–विमर्श–हेतवे श्रीपरमगुरवे नमः । अमुकानन्दनाथ–श्रीपादुकां पूजयामि तर्पयामि नमः ।। स्वात्मारामपंजरविलीनतेजसे श्रीपरमेष्ठिगुरवे नमः ।। अमुकानन्दनाथ–श्रीपादुकां पूजयामि तर्पयामि नमः ।। ७ ।।

## ।।प्रथमावरणम्।।

षट्कोणार्बहिः देव्याः अग्नीशासुर–
वायव्य–पूर्व–सर्व–दिक्ष्वंग पूजनम् ।।

ओं ऐं हृदयाय नमः। हृदयशक्ति–श्रीपादुकां
पूजयामि तर्पयामि नमः।। (आग्नेये)

ओं ह्रीं शिरसे स्वाहा। शिरः शक्ति श्रीपादुकां
पूजयामि तर्पयामि नमः।।(ईशान्ये)

ओं क्लीं शिखायै वषट् । शिखाशक्ति श्रीपादुकां
पूजयामि तर्पयामि नमः।(नैर्ऋत्यां)

ओं चामुण्डायै। कवचाय हुं कवचशक्ति श्रीपादुकां
पूजयामि तर्पयामि नमः। (वायव्यां)

ओं विच्चे। नेत्रत्रयाय वौषट् । नेत्रशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः। (पूर्वे)

अस्त्राय फट् । अस्त्रशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।।(सर्वदिक्षु) ।।

ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे। श्रीचण्डिका श्रीपादुकां पूजयामि तर्पयामि नमः ।। (त्रिकोणमध्ये ।। त्रिः ।।)

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं प्रथमावरणार्चनम् ।। ९

## ।। द्वितीयावरणम् ।।

त्रिकोणे।

ओं सरस्वतीब्रह्म–श्रीपादुकां पूजयामि तर्पयामि नमः। (देव्यग्रकोणे)

ओं लक्ष्मीहृषीकेश–श्रीपादुकां पूजयामि तर्पयामि नमः। (दक्षकोणे)

ओं गौरीरुद्र–श्रीपादुकां पूजयामि तर्पयामि नमः। (वामकोणे)

ओं सिं सिंह–श्रीपादुकां पूजयामि तर्पयामि नमः। (देव्याः दक्षिणपार्श्वे)

ओं मं महिष–श्रीपादुकां पूजयामि तर्पयामि नमः। (वामपार्श्वे)

ओं कां काल–श्रीपादुकां पूजयामि तर्पयामि नमः।(दक्षिण पार्श्वे)

ओं मृं मृत्यु–श्रीपादुकां पूजयामि तर्पयामि नमः। (वाम पार्श्वे)

मूलं । श्री चण्डिका–श्रीपादुकां पूजयामि तर्पयामि नमः ।। (त्रिः)

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं द्वितीयावरणार्चनम् ।।१।।

## ।। तृतीयावरणम् ।।

षट्कोणेषु देव्यग्रकोणमारभ्य प्रादक्षिण्य–क्रमेण

ओं नं नन्दजाशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं रं रक्तदन्तिकाशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं शां शाकम्भरीशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं दुं दुर्गाशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं भीं भीमाशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं भ्रां भ्रामरीशक्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।

मूलं ।। श्रीचण्डिका श्रीपादुकां पूजयामि तर्पयामि नमः (त्रिः)।।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले ।
भक्त्या समर्पये तुभ्यं तृतीयावरणार्चनम् ।।१०।।

## ।। तुरीयावरणम् ।।

अष्टपत्रेषु देव्यग्रदलमारभ्य वामावर्तेन ।

ओं आं ब्राह्मी श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं ईं नारायणी श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं ऊं माहेश्वरी श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं ॠं चामुण्डा श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं ॡं कौमारी श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं ऐं अपराजिता श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं औं वाराही श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं अः नारसिंही श्रीपादुकां पूजयामि तर्पयामि नमः।
मूलं । श्री चण्डिका श्रीपादुकां पूजयामि तर्पयामि नमः (त्रिः)।।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं तुरीयावरणार्चनम् ।।११।।

## ।। पंचमावरणम् ।।

पुनः अष्टपत्रेषु देव्यग्रदलमारभ्य वामावर्तेन।
ओं ह्रीं – असितांगभैरव श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं ह्रीं – रुरु भैरव श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ह्रीं – चण्ड भैरव श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं ह्रीं –क्रोध भैरव श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं ह्रीं – उन्मत्त भैरव श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ह्रीं –कपाल भैरव श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ह्रीं – भीषण भैरव श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ह्रीं – संहार भैरव श्रीपादुकां पूजयामि तर्पयामि नमः।

मूलं । श्री चण्डिका श्रीपादुकां पूजयामि तर्पयामि नमः (त्रिः) ।।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं पंचमावरणार्चनम् ।।१२।।

## ।। षष्ठावरणम् ।।

चतुर्विंशतिदले देव्यग्रदलमारभ्य वामावर्तेन ।

ओं विं –विष्णुमाया श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं चें – चेतना श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं बुं –बुद्धि श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं निं–निद्रा श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं क्षुं–क्षुधा श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं छां–छाया श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं शं–शक्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं तृं – तृष्णा श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं क्षां– क्षान्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं जां–जाति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं लं लज्जा श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं शां शान्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं श्रं –श्रद्धा श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं कां –कान्ति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं लं –लक्ष्मी श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं धृं –धृति श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं वृं–वृत्ति श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं श्रृं–श्रृति श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं स्मृं–स्मृति श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं तुं – तुष्टि श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं पुं – पुष्टि श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं दं – दया श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं मां–मातृ श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं भ्रां – भ्रान्ति श्रीपादुकां पूजयामि तर्पयामि नमः।

मूलं । श्रीचण्डिका श्रीपादुकां पूजयामि तर्पयामि नमः (त्रिः)

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं षष्ठाख्यावरणार्चनम् ।।१३।।

## ।। सप्तमावरणम् ।।

चतुरश्रे (देव्याः पश्चिमद्वारमारभ्य) प्रसिद्ध–पूर्वादिदिक्षु प्रादक्षिण्यक्रमेण।
ओं लं–इन्द्र श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं रं – अग्नि श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं मं –यम श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं क्षं–निर्ऋति श्रीपादुकां पूजयामि तर्पयामि नमः।
ओं वं–वरुण श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं यं–वायु श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं सं – सोम श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं हं– ईशान श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं ह्लीं –अनन्त श्रीपादुकां पूजयामि तर्पयामि नमः

(निर्ऋति–वरुणयोर्मध्ये)

ओं अं –ब्रह्म श्रीपादुकां पूजयामि तर्पयामि नमः (पूर्व–ईशान्योर्मध्ये)।

मूलं । श्रीचण्डिका श्रीपादुकां पूजयामि तर्पयामि नमः(त्रिः) ।।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।

भक्त्या समर्पये तुभ्यं सप्तमावरणार्चनम् ।।१४।।

## ।। अष्टमावरणम् ।।

चतुरश्रबाह्ये प्रसिद्ध–पूर्वादिदिक्षु प्रादक्षिण्येन ।

ओं वं –वज्र श्रीपादुकां पूजयामि तर्पयामि नमः (पूर्वे) ।

ओं शं – शक्ति श्रीपादुकां पूजयामि तर्पयामि नमः(आग्नेये) ।

ओं दं –दण्ड श्रीपादुकां पूजयामि तर्पयामि नमः(दक्षिणे) ।

ओं खं–खड्ग श्रीपादुकां पूजयामि तर्पयामि नमः(नैर्ऋत्यां) ।

ओं पां –पाश श्रीपादुकां पूजयामि तर्पयामि नमः (पश्चिमे) ।

ओं अं – अंकुश श्रीपादुकां पूजयामि तर्पयामि नमः(वायव्ये) ।

ओं गं–गदा श्रीपादुकां पूजयामि तर्पयामि नमः(उत्तरे)।

ओं शूं –शूल श्रीपादुकां पूजयामि तर्पयामि नमः(ईशान्ये) ।

ओं चं – चक्र श्रीपादुकां पूजयामि तर्पयामि नमः
(निर्ऋति–वरुणयोर्मध्ये)।

ओं पं – पद्म श्रीपादुकां पूजयामि तर्पयामि नमः (पूर्व– ईशानयोर्मध्ये)।

मूलं। श्रीचण्डिका श्रीपादुकां पूजयामि तर्पयामि नमः (त्रिः) ॥

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं अष्टमावरणार्चनम् ॥१५॥

## ।। नवमावरणम् ।।

देव्याः दक्षिणभागे ।।

ओं ब्रं–ब्रह्म श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं विं –विष्णु श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं रुं–रुद्र श्रीपादुकां पूजयामि तर्पयामि नमः।।

ततो महालक्ष्मी–देव्यस्त्राणि पूजयेत् ।।

ओं अं – अक्षमाला श्रीपादुकां पूजयामि तर्पयामि नमः ।

ओं पं –पद्म श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं सां –सायक श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं खं – खड्ग श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं वं – वज्र श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं गं – गदा श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं चं –चक्र श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं सुं– सुराभाजन श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं शं –शंख श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं शं –शक्ति श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं पं – परशु श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं धं – धनु श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं चं –चर्म श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं दं–दण्ड श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं कुं–कुण्डिका श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं घं – घण्टा श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं पां–पाश श्रीपादुकां पूजयामि तर्पयामि नमः।

ओं शूं–शूल श्रीपादुकां पूजयामि तर्पयामि नमः।।

चतुरश्रस्य बहिः कोणेषु

ओं वं– वटुक श्रीपादुकां पूजयामि तर्पयामि नमः (वायव्यां)।

ओं यां–योगिनी श्रीपादुकां पूजयामि तर्पयामि नमः(ईशान्येः)।

ओं क्षं–क्षेत्रपाल श्रीपादुकां पूजयामि तर्पयामि नमः।(नैर्ऋत्यां)

ओं गं –गणेश श्रीपादुकां पूजयामि तर्पयामि नमः(आग्नेये)।

ओं दुं–दुर्गा श्रीपादुकां पूजयामि तर्पयामि नमः(मध्ये।)

ओं विं – विष्णु श्रीपादुकां पूजयामि तर्पयामि नमः(ईशान्यां)।

ओं शिं–शिव श्रीपादुकां पूजयामि तर्पयामि नमः(आग्नेये)।

ओं सुं– सूर्यं श्रीपादुकां पूजयामि तर्पयामि नमः (वायव्यां)
ओं गं – गणेश श्रीपादुकां पूजयामि तर्पयामि नमः(नैर्ऋत्यां)।।

मूलं । श्रीचण्डिका श्रीपादुकां पूजयामि तर्पयामि नमः (त्रिः)।

अभीष्टसिद्धिं मे देहि शरणागतवत्सले।
भक्त्या समर्पये तुभ्यं नवमावरणार्चनम् ।।१६।।

# श्रीचण्डी षष्ठ्युत्तरत्रिशत्यर्चनं

## (प्रतिपदायां- भूपुरे- प्रकाशानन्दनाथवासरे)

| | | | |
|---|---|---|---|
| ओं श्रीनित्यायै | नमः | ओं मुक्तिदायिन्यै | नमः |
| ओं जगन्मूर्तये | नमः | ओं परमायै | नमः |
| ओं देव्यै | नमः | ओं हेतुभूतायै | नमः |
| ओं भगवत्यै | नमः | ओं सनातन्यै | नमः |
| ओं महामायायै | नमः | ओं संसारबन्धहेतवे | नमः |
| ओं प्रसन्नायै | नमः | ओं सर्वेश्यै | नमः |
| ओं वरदायै | नमः | ओं ईश्वर्यै | नमः |

ओं योगनिद्रायै नमः
ओं हरिनेत्रकृतालयायै नमः
ओं विश्वेश्वर्यै नमः
ओं जगद्धात्र्यै नमः
ओं स्थितिकारिण्यै नमः
ओं संहारकारिण्यै नमः
ओं श्रीनिद्रायै नमः
ओं भगवत्यै नमः
ओं अतुलायै नमः
ओं तेजसां निधये नमः

ओं स्वाहायै नमः
ओं स्वधायै नमः
ओं वषट्कारायै नमः
ओं स्वरात्मिकायै नमः
ओं सुधायै नमः
ओं अक्षरायै नमः
ओं त्रिधामात्रात्मिकायै नमः
ओं अर्धमात्रात्मिकायै नमः
ओं स्वररूपिण्यै नमः
ओं अनुच्चार्यायै नमः

| | |
|---|---|
| ओं सन्ध्यायै नमः | ओं परायै नमः |
| ओं सावित्र्यै नमः | ओं सृष्टिरूपायै नमः |
| ओं जनन्यै नमः | ओं जगद्योनये नमः |

(द्वितीयायां– षोडशदले– विमर्शानन्दनाथवासरे)

| | |
|---|---|
| ओं श्रीस्थितिरूपायै नमः | ओं महामेधायै नमः |
| ओं संहृतिरूपायै नमः | ओं महामोहायै नमः |
| ओं जगन्मयायै नमः | ओं भवत्यै नमः |
| ओं महाविद्यायै नमः | ओं महादेव्यै नमः |
| ओं महामायायै नमः | ओं महासुर्यै नमः |

| | | | |
|---|---|---|---|
| ओं प्रकृत्यै | नमः | ओं सुलक्षणायै | नमः |
| ओं सत्वादिगुणत्रयविभाविन्यै | नमः | ओं लज्जायै | नमः |
| ओं कालरात्र्यै | नमः | ओं पुष्ट्यै | नमः |
| ओं महारात्र्यै | नमः | ओं तुष्ट्यै | नमः |
| ओं मोहरात्र्यै | नमः | ओं शान्त्यै | नमः |
| ओं दारुणायै | नमः | ओं क्षान्त्यै | नमः |
| ओं सुरेश्वर्यै | नमः | ओं खड्गिन्यै | नमः |
| ओं ह्रियै | नमः | ओं शूलिन्यै | नमः |
| ओं बुद्ध्यै | नमः | ओं घोरायै | नमः |
| ओं श्रीविद्यायै | नमः | ओं गदिन्यै | नमः |

| | | | |
|---|---|---|---|
| ओं चक्रिण्यै | नमः | ओं भुशुण्ड्यै | नमः |
| ओं शङ्खिन्यै | नमः | ओं परिघायुधायै | नमः |
| ओं चापिन्यै | नमः | ओं सौम्यायै | नमः |
| ओं बाणायै | नमः | ओं सुन्दर्यै | नमः |

## (तृतीयायां- अष्टदले- आनन्दानन्दनाथवासरे)

| | | | |
|---|---|---|---|
| ओं श्रीपरायै | नमः | ओं असदात्मिकायै | नमः |
| ओं परमेश्वर्यै | नमः | ओं सदसदात्मिकायै | नमः |
| ओं परमायै | नमः | ओं अखिलात्मिकायै | नमः |
| ओं सदात्मिकायै | नमः | ओं नार्यै | नमः |

| | | | |
|---|---|---|---|
| ओं शिवायै | नमः | ओं गुणात्मिकायै | नमः |
| ओं सिंह्मवाहिन्यै | नमः | ओं सर्वाश्रयायै | नमः |
| ओं अम्बिकायै | नमः | ओं अव्याकृतायै | नमः |
| ओं श्रीभद्रकालिकायै | नमः | ओं आद्यायै | नमः |
| ओं चण्डिकायै | नमः | ओं शब्दात्मिकायै | नमः |
| ओं जगन्मात्रे | नमः | ओं वार्तायै | नमः |
| ओं महिषासुरघातिन्यै | नमः | ओं आर्तिहन्त्र्यै | नमः |
| ओं आत्मशक्तये | नमः | ओं मेधायै | नमः |
| ओं सर्वानन्दमय्यै | नमः | ओं दुर्गायै | नमः |
| ओं श्रद्धायै | नमः | ओं भवसमुद्रनवे | नमः |

| | |
|---|---|
| ओं कैटाभारि–हृदयैक–कृतालयायै नमः | ओं महादेव्यै नमः |
| ओं गौर्यै नमः | ओं शिवायै नमः |
| ओं सदार्द्रचित्तायै नमः | ओं भद्रायै नमः |
| ओं गीर्वाणवरदायिन्यै नमः | ओं रौद्र्यै नमः |
| ओं देव्यै नमः | ओं धात्र्यै नमः |
| | ओं ज्योत्स्नायै नमः |

## (चतुर्थ्यां- चतुर्दशारे- ज्ञानानन्दनाथवासरे)

| | |
|---|---|
| ओं श्री इन्दुरूपिण्यै नमः | ओं कल्याण्यै नमः |
| ओं सुखायै नमः | ओं ऋद्ध्यै नमः |

| | | | |
|---|---|---|---|
| ओं सिद्ध्यै | नमः | ओं कृत्स्नायै | नमः |
| ओं कुर्मिकायै | नमः | ओं धूम्रायै | नमः |
| ओं नैऋत्यै | नमः | ओं अतिसौम्यायै | नमः |
| ओं भूभृतां लक्ष्म्यै | नमः | ओं अतिरौद्रायै | नमः |
| ओं शर्वाण्यै | नमः | ओं जगत्प्रतिष्ठायै | नमः |
| ओं दुर्गायै | नमः | ओं कृष्णायै | नमः |
| ओं दुर्गपारायै | नमः | ओं श्रीविष्णुमायायै | नमः |
| ओं सारायै | नमः | ओं चेतनायै | नमः |
| ओं सर्वकारिण्यै | नमः | ओं बुद्धिरूपायै | नमः |
| ओं क्षान्त्यै | नमः | ओं निद्रारूपायै | नमः |

ओं क्षुधारूपायै नमः
ओं छायारूपायै नमः
ओं शक्तिरूपायै नमः
ओं तृष्णारूपायै नमः
ओं क्षान्तिरूपायै नमः
ओं जातिरूपायै नमः
ओं लज्जारूपायै नमः
ओं शान्तिरूपायै नमः

ओं श्रद्धारूपायै नमः
ओं कान्तिरूपायै नमः
ओं लक्ष्मीरूपायै नमः
ओं वृत्तिरूपायै नमः
ओं धृतिरूपायै नमः
ओं स्मृतिरूपायै नमः
ओं दयारूपायै नमः
ओं तुष्टिरूपायै नमः

## (पञ्चम्यां - बहिर्दशारे- सत्यानन्दनाथवासरे)

| | | | |
|---|---|---|---|
| ओं श्रीपुष्टिरूपायै | नमः | ओं हिमाचलकृतालयायै | नमः |
| ओं मातृरूपायै | नमः | ओं धूम्रलोचनहन्त्र्यै | नमः |
| ओं भ्रान्तिरूपायै | नमः | ओं असिन्यै | नमः |
| ओं शुभहेतवे | नमः | ओं पाशिन्यै | नमः |
| ओं पार्वत्यै | नमः | ओं विचित्रखट्वाङ्गधरायै | नमः |
| ओं कौशिक्यै | नमः | ओं नरमालाविभूषणायै | नमः |
| ओं कालिकायै | नमः | ओं द्वीपिचर्मपरीधानायै | नमः |
| ओं उग्रचण्डायै | नमः | ओं शुष्कमांसायै | नमः |
| ओं कृष्णायै | नमः | ओं अतिभैरवायै | नमः |

| | | | |
|---|---|---|---|
| ओं अतिविस्तारवदनायै | नमः | ओं ब्रह्माण्यै | नमः |
| ओं जिह्वाललनभीषणायै | नमः | ओं ब्रह्मवादिन्यै | नमः |
| ओं श्रीनिमग्नायै | नमः | ओं माहेश्वर्यै | नमः |
| ओं आरक्तनयनायै | नमः | ओं वृषारूढायै | नमः |
| ओं नादापूरितदिङ्मुखायै | नमः | ओं त्रिशूलधारिण्यै | नमः |
| ओं भीमाक्ष्यै | नमः | ओं वरधारिण्यै | नमः |
| ओं भीमरूपायै | नमः | ओं महाबलायै | नमः |
| ओं चण्डविनाशिन्यै | नमः | ओं अहिवलयायै | नमः |
| ओं मुण्डविनाशिन्यै | नमः | ओं चन्द्ररेखाविभूषितायै | नमः |
| ओं चामुण्डायै | नमः | ओं कौमार्यै | नमः |
| ओं लोकविख्यातायै | नमः | ओं शक्तिहस्तायै | नमः |

## (षष्ठ्यां-अन्तर्दशारे- पूर्णानन्दनाथवासरे)

| | | | |
|---|---|---|---|
| ओं श्रीमयूरवरवाहनायै | नमः | ओं वाराह्यै | नमः |
| ओं गुहरूपायै | नमः | ओं श्रीनारसिंह्यै | नमः |
| ओं वैष्णव्यै | नमः | ओं घोररावायै | नमः |
| ओं गरुडोपरिस्थितायै | नमः | ओं सटाक्षेपक्षिप्तनक्षत्र संहत्यै | नमः |
| ओं शङ्खहस्तायै | नमः | ओं वज्रहस्तायै | नमः |
| ओं चक्रहस्तायै | नमः | ओं ऐन्द्र्यै | नमः |
| ओं गदाहस्तायै | नमः | ओं गजराजोपरिस्थितायै | नमः |
| ओं शार्ङ्गहस्तायै | नमः | ओं सहस्रनयनायै | नमः |
| ओं खड्गहस्तायै | नमः | | |

| | | | |
|---|---|---|---|
| ओं शक्रहस्तायै | नमः | ओं उग्रायै | नमः |
| ओं भीषणायै | नमः | ओं निशुम्भासुरघातिन्यै | नमः |
| ओं श्रीशक्तये | नमः | ओं शुम्भहन्त्र्यै | नमः |
| ओं अत्युग्रायै | नमः | ओं प्रपन्नार्तिहरायै | नमः |
| ओं शिवाशतनिनादिन्यै | नमः | ओं विश्वेश्वर्यै | नमः |
| ओं अपराजितायै | नमः | ओं आधारभूतायै | नमः |
| ओं शिवदूत्यै | नमः | ओं महीरूपायै | नमः |
| ओं कात्यायन्यै | नमः | ओं अपांरूपायै | नमः |
| ओं रक्तबीजनाशिन्यै | नमः | ओं आप्यायिन्यै | नमः |
| ओं चन्द्रघण्टिकायै | नमः | ओं अलङ्घ्यवीर्यायै | नमः |
| ओं अष्टादशभुजायै | नमः | ओं अनन्तबीजायै | नमः |

## (सप्तम्यां - अष्टारे स्वभावानन्दनाथवासरे)

| | | | |
|---|---|---|---|
| ओं श्रींबीजस्वरूपिण्यै | नमः | ओं परिणामप्रदायिन्यै | नमः |
| ओं सम्मोहिन्यै | नमः | ओं सर्वमङ्गलमाङ्गल्यायै | नमः |
| ओं विद्यायै | नमः | ओं शिवायै | नमः |
| ओं स्वर्गप्रदायिन्यै | नमः | ओं सर्वार्थसाधिकायै | नमः |
| ओं मुक्तिप्रदायिन्यै | नमः | ओं शरण्यायै | नमः |
| ओं भक्तजनहृत्संस्थायै | नमः | ओं त्र्यम्बकायै | नमः |
| ओं नारायण्यै | नमः | ओं गौर्यै | नमः |
| ओं शिवायै | नमः | ओं सृष्ट्यात्मिकायै | नमः |
| ओं कलाकाष्ठादिरूपायै | नमः | ओं स्थित्यात्मिकायै | नमः |

| | | | |
|---|---|---|---|
| ओं लयात्मिकायै | नमः | ओं विष्णुरूपायै | नमः |
| ओं शक्त्यै | नमः | ओं परात्परायै | नमः |
| ओं सनातन्यै | नमः | ओं हंसयुक्तविमानस्थायै | नमः |
| ओं गुणाश्रयायै | नमः | ओं ब्रह्माणीरूपधारिण्यै | नमः |
| ओं गुणमयायै | नमः | ओं कौशाम्भोधारिण्यै | नमः |
| ओं नारायणस्वरूपिण्यै | नमः | ओं क्षुरिकाधारिण्यै | नमः |
| ओं शरणागतपरित्राणपरायणायै | नमः | ओं शूलधारिण्यै | नमः |
| ओं दीनार्तत्राणपरायणायै | नमः | ओं चन्द्रधारिण्यै | नमः |
| ओं आर्तपरित्राणपरायणायै | नमः | ओं अहिधारिण्यै | नमः |
| ओं सर्वस्यार्तिहरायै | नमः | ओं वरधारिण्यै | नमः |
| ओं देव्यै | नमः | ओं महावृषभसंरूढायै | नमः |

## (अष्टम्यां - त्रिकोणे- प्रतिभानन्दनाथवासरे)

| | | | |
|---|---|---|---|
| ओं श्रीमहेश्वर्यै | नमः | ओं दम्ष्ट्राकरालवदनायै | नमः |
| ओं त्रैलोक्यत्राणसहितायै | नमः | ओं शिरोमालाभूषणायै | नमः |
| ओं किरीटवरधारिण्यै | नमः | ओं चामुण्डायै | नमः |
| ओं शिवदूतीस्वरूपिण्यै | नमः | ओं मुण्डमथन्यै | नमः |
| ओं हतदैत्यायै | नमः | ओं लक्ष्म्यै | नमः |
| ओं वृत्रप्राणहरणायै | नमः | ओं लज्जायै | नमः |
| ओं महाबलायै | नमः | ओं महाविद्यायै | नमः |
| ओं घोररूपायै | नमः | ओं श्रद्धायै | नमः |
| ओं महारवायै | नमः | ओं पुष्ट्यै | नमः |

| | |
|---|---|
| ओं सदाध्रुवायै | नमः |
| ओं महारात्र्यै | नमः |
| ओं श्रीमहाविद्यायै | नमः |
| ओं महामेधायै | नमः |
| ओं सरस्वत्यै | नमः |
| ओं वरायै | नमः |
| ओं भीतिदायै | नमः |
| ओं तामस्यै | नमः |
| ओं नियतेशायै | नमः |
| ओं सर्वतः पाण्यन्तायै | नमः |
| ओं सर्वतः पादान्तायै | नमः |
| ओं सर्वतोऽक्ष्यन्तायै | नमः |
| ओं सर्वतः शिरोऽन्तायै | नमः |
| ओं सर्वतोमुखान्तायै | नमः |
| ओं सर्वतोघ्राणान्तायै | नमः |
| ओं सर्वस्वरूपिण्यै | नमः |
| ओं सर्वेशायै | नमः |
| ओं सर्वरूपायै | नमः |
| ओं सर्वशक्तिसमन्वितायै | नमः |
| ओं समस्तरोगहन्त्र्यै | नमः |
| ओं समस्ताभीष्टदायिन्यै | नमः |

## (नवम्यां - बिन्दौ- सुभागानन्दनाथवासरे)

ओं श्रीविश्वात्मिकायै नमः
ओं पापहारिण्यै नमः
ओं उत्पातपाकजनितोपसर्ग–
क्षयनाशिन्यै नमः
ओं विश्वार्तिहारिण्यै नमः
ओं त्रैलोक्यवरदायिन्यै नमः
ओं नन्दगोपगृहेजातायै नमः
ओं यशोदागर्भसम्भवायै नमः
ओं विन्ध्याद्रिवासिन्यै नमः
ओं रौद्ररूपिण्यै नमः
ओं श्रीरक्तदन्तिकायै नमः
ओं दाडिमीकुसुमप्रख्यायै नमः
ओं अयोनिजायै नमः
ओं शतलोचनायै नमः
ओं भीमायै नमः
ओं शाकम्भर्यै नमः

ओं दुर्गायै नमः
ओं दानवेन्द्रविनाशिन्यै नमः
ओं महाकाल्यायै नमः
ओं महाकाल्यै नमः
ओं श्रीमहामायैं नमः
ओं अजायै नमः
ओं लक्ष्मीप्रदायै नमः
ओं वृद्धिप्रदायै नमः
ओं नित्यायै नमः
ओं पुत्रपौत्रवर्धिन्यै नमः

ओं शैलपुत्र्यै नमः
ओं ब्रह्मचारिण्यै नमः
ओं चन्द्रघण्टायै नमः
ओं विशालाक्ष्यै नमः
ओं श्रीकूष्माण्डायै नमः
ओं वेदमातृकायै नमः
ओं स्कन्दमात्रे नमः
ओं गणेशायै नमः
ओं विरूपाक्ष्यै नमः
ओं अम्बिकायै नमः

| | | | |
|---|---|---|---|
| ओं महागौर्यै | नमः | ओं महाबलायै | नमः |
| ओं महावीर्यायै | नमः | ओं महापराक्रमायै | नमः |

## (दशम्यां - बिन्दौ - समष्टि पूजनं)

धूपः । दीपः । नैवेद्यम् । नीराजनम् । मन्त्रपुष्पम् ।।

आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजाविधिं न जानामि क्षमस्व परमेश्वरि ।।

अज्ञानाद्विस्मृतेर्भ्रान्त्या यन्न्यूनमधिकं-कृतम् ।
तत्सर्वं क्षम्यतां देवि प्रसीद परमेश्वरि ।।

कामेश्वरि जगन्मातः सच्चिदानन्द-विग्रहे ।

गृहाणार्चामिमां प्रीत्या प्रसीद परमेश्वरि ।।

अनेन यथाशक्त्यर्चनेन भगवती श्रीजगदम्बा प्रीयताम् ।।१६।।

## ।। कुमारी पूजनम् ।।

अष्टदलपीठोपरि कुमारीं समावेश्य।

ओं क्लीं– कुलकुमारिकायै नमः।

मन्त्राक्षरमयीं लक्ष्मीं मातृणां रूपधारिणीम् । नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ।। (अनेनैव मन्त्रेण नवापि आवाहयेत् । अशक्तौ यथाशक्ति एकामपि पूजयेत् ) ।।

ओं क्लीं कुल–कुमार्यै नमः। पाद्यं समर्पयामि। अर्घ्यं। आचमनीयं। वस्त्रं। भूषणम्। गन्धं। पुष्पं। विशेषार्घ्यामृतम्। अर्चनम्॥

ओं क्लीं कौमार्यै नमः। ओं त्रिपुरायै नमः। ओं कल्याण्यै नमः। ओं रोहिण्यै नमः। ओं कामिन्यै नमः। ओं चण्डिकायै नमः। ओं शांकर्यै नमः। ओं दुर्गायै नमः। ओं सुभद्रायै नमः॥ धूपः। दीपः। नैवेद्यं। नीराजनं॥

## ॥ प्रार्थना ॥

वन्दितांघ्रियुगे देवि सर्वसौभाग्यदायिनि।
रूपं देहि जयं देहि यशो देहि द्विषो जहि॥ इति प्रार्थना॥

## ।। बलिदानम् ।।

देवताग्रे मध्ये भूमौ सिन्दूरेण बिन्दु–त्रिकोण–वृत्त–चतुरश्रात्मकयन्त्रं विलिख्य ।।

मूलं । चण्डिकाबलि–पात्राधार–मण्डलाय नमः । अन्नव्यंजनयुतं बलिं निधाय ।।

मूलं । दुर्गाबलिद्रव्याय नमः ।

मूलं । सांगायै सायुधायै सवाहनायै सपरिवारायै सशक्तिकायै ब्रह्माविष्णुरुद्रसहितायै त्रिगुणात्मिका–चण्डिकादेव्यै नमः ।।

मूलं ।। एह्येहि जगतां जननि इममन्नबलिं गृह्ण । सिद्धिं देहि शत्रुक्षयं

कुरु ह्रीं ह्रीं हुं फट् स्वाहा। एष बलिः सांगायै सायुधायै सवाहनायै सपरिवारायै सशक्तिकायै ब्रह्माविष्णुरुद्रसहितायै त्रिगुणात्मिका – श्रीदुर्गादेव्यै नमः। इति वामांगुष्ठानामिकाभिः बलिमुत्सृज्य दक्षहस्तेन जलं त्यजेत् ।।

शरणागतदीनार्त–परित्राण–परायणे।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते।।

ओं वज्रनखदंष्ट्रायुधाय सिंहाय हुं फट् नमः। इमं बलिं गृह्ण स्वाहा।। ओं भूः महिषश्रृंगेभ्यो इमं बलिं गृह्ण स्वाहा।। सर्वाभ्यो बलिदेवताभ्यो नमः । इति सर्वमभ्यर्च्य।।

वटुकाद्या सुराः सर्वे सर्वसिद्धिविधायिनः।
शान्तिं पुष्टिं प्रयच्छन्तु त्वत्प्रसादान्महेश्वरि।।

शंखतीर्थेनात्मानं प्रोक्षयेत् ।।

समर्पणम् ।।

साधु वाऽसाधु वा कर्म यद्यदाचरितं मया।
तत्सर्वं कृपया देवि गृहाणाराधनं मम।।

# दुर्गासूक्तम्

जातवेदसे सुनवाम सोम-मरातीयतो निदहाति वेदः।
स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुंदुरिताऽत्यग्निः।।
तामग्नि-वर्णां तपसा ज्वलन्तीं वैरोचनीं कर्मफलेषु जुष्टाम्।
दुर्गां देवीꣳशरणमहं प्रपद्ये सुतरसि तरसे नमः।।
अग्ने त्वं पारया नव्यो अस्मान्थ्स्वस्तिभिरति दुर्गाणिविश्वा।
पूश्च पृथ्वी बहुला न उर्वी भवा तोकाय तनयाय शंयोः।।

विश्वानि नो दुर्गहा जातवेदस्सिन्धुं न नावा दुरिताऽतिपर्षि।
अग्ने अत्रिवन् मनसा गृणानोऽस्माकं बोध्यविता तनूनाम्।।
पृतनाजितं सहमान-मुग्र-मग्निं हुवेम परमात् सधस्थात्।
स नः पर्षदति दुर्गाणि विश्वा क्षामद्देवो अति दुरि तात्यग्निः।।
प्रत्नोषि क-मीड्यो अध्वरेषु सनाच्च होता नव्यश्च सत्सि।
स्वां चाग्ने तनुवं पिप्रयस्वास्मभ्यं च सौभग-मायजस्व।।
गोभिर्जुष्ट-मयुजो निषिक्तं तवेन्द्र विष्णोरनुसंचरेम।
नाकस्य पृष्ठ-मभि-संवसानो वैष्णवीं लोक इहमादयन्ताम्।।

ओं कात्यायनायं विद्महे कन्यकुमारिं धीमहि।

तन्नो दुर्गिः प्रचोदयांत्।।

ओं शान्तिः शान्तिः शान्तिः।।

## चण्डी होमः

श्रीगणेशाय नमः।।

मण्डप–प्रवेशः। यजमानः शुभदिने सपत्नीकस्तिलतैलेन कृताभ्यंगः स्नात्वा संपूर्णकलशहस्तो मण्डपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविश्य उविश्य।। १

अनुज्ञा । पवित्रं धृत्वा ।।

शुक्लांबरधरं +शान्तये ।। ओं भूः+भूर्भुवस्सुवरोम् ।। विघ्नेश्वर–पूजां कृत्वा ।।

संकल्पः ।। शुभे शोभने मूहूर्ते+ ममोपात्त+ श्रीपरमेश्वर प्रीत्यर्थं श्रीदुर्गा–लक्ष्मी–सरस्वती–प्रीतिद्वारा अस्माकं सर्वेषां सकुटुम्बानां क्षेमस्थैर्य–वीर्य–विजय–आयुरारोग्य–ऐश्वर्याभिवृद्ध्यर्थं सर्वारिष्ट–निवारणार्थं श्रीचण्डीहोमं
(नवचण्डी–शतचण्डी–सहस्रचण्डी वा ब्राह्मणद्वारा) करिष्ये ।। २

अप उपस्पृश्य ।। विघ्नेश्वरमुद्वास्य ।। ३

मातृका–पूजनम् ।। ओं गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः ।। हृष्टिः पुष्टि–स्तथा तुष्टिरात्मनः कुलदेवता । गणेशानादिका ह्येता वृद्धौ पूज्याश्च षोडश ।।

गौरीमिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ।।

गौर्यादि षोडश मातॄः ध्यायामि। आवाहयामि ।। षोडशोपचारपूजां कृत्वा ।।

अनया पूजया सांगाः सपरिवाराः गौर्यादि षोडशमातरः प्रीणन्तु ।। ४

नान्दी श्राद्धम् ।। ५

आचार्यादीनां वरणम् ।। ओं अद्यपूर्वोक्त इत्यादि ।
अमुकगोत्र अमुकशर्माहं अस्मिन् चण्डीहोमकर्मणि आचार्यत्वेन त्वां वृणे ।। (वृतोऽस्मीति आचार्यः) ।। पाद्यं, अर्घ्यं, आचमनीयं, गन्धं, अक्षतान् , पुष्पाणि समर्प्य । वस्त्रादिना संपूज्य । कंकण बन्धनम् । प्रार्थना ।।

आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन् आचार्यस्तु भव प्रभो ।। (शतचण्ड्यां दश सहस्रचण्ड्यां शतम् ।।) ६

यजमान हस्ते रक्षाबन्धनम् ।। ७

ईशान्ये वरुण-आवाहनम् ।। पुण्याहवाचनम् ।। नवग्रह आवाहनम् ।

दुर्गा–गणपति–क्षेत्रपालक–अभयंकर–वास्तु–त्र्यम्बक–नक्षत्र–
देवताद्यावाहनम् । षोडशोपचार पूजा ।। ८

स्थण्डिलम् । अग्निं प्रतिष्ठाप्य ।

अग्निमुखान्तं (वैदिकं तान्त्रिकं वा) कृत्वा ।
गणेशादि मन्त्रेण आदौ हवनं कुर्यात् ।।

ततः कवच–अर्गला–कीलकं रात्रिसूक्तं च पठित्वा नवार्णन्यासान्
विधाय नवार्णेन अष्टोत्तरशतवारं हुत्वा ।। ९

## प्रधानहोमः ।।

मार्कण्डेय उवाच इत्यारम्भ्य ओं सावर्णिर्भविता मनुः इत्यन्तं, पायस–तिल–पलाशपुष्प–सर्षप–पूगीफल–लाज–दूर्वांकुर–यव–बिल्वफल–रक्तचन्दन–गुग्गुलु–द्रव्यैर्यथालाभ–द्रव्यैर्वा तिलमिश्र–पायसेन घृतेन वा होमः ।। १०

अध्यायसमाप्तौ( उवाच–स्थले च) पत्रपुष्पफलैर्होमः ।।
एवं प्रधानहोमं कृत्वा पुनरष्टोत्तरशतवारं नवार्णं च जुहुयात् ।। ११
(केचित् पीठदेवताभ्यो नामभिः आवरणदेवता–नामभिरपि जुह्वन्ति ।।)

महाव्याहृति–होमः ।। भूरग्नये च पृथिव्यै च महते च स्वाहा । अग्नये पृथिव्यै महत इदम् न मम ।। भुवो वायवे चान्तरिक्षाय च महते च स्वाहा । वायवे अन्तरिक्षाय महत इदम् न मम ।। सुवरादित्याय च दिवे च महते च स्वाहा । आदित्याय दिवे महत इदम् न मम ।। भूर्भुवस्सुवश्चन्द्रमसे च नक्षत्रेभ्यश्च दिग्भ्यश्च महते च स्वाहा । चन्द्रमसे नक्षत्रेभ्यो दिग्भ्यो महत इदम् न मम ।। १२

जयादि होमं कृत्वा ।। १३

परिध्यंजनम् । अनाज्ञातमित्यादि+नमो रुद्राय पशुपतये स्वाहा । रुद्राय पशुपतय इदम् न मम ।। १४

इति प्रायश्चित्तादि होमान्तं कृत्वा इन्द्रादि-नवग्रह क्षेत्रपालादिभ्यो बलिं दद्यात् ।। १५

बलिदानम् ।। अद्य कृतस्य कर्मणः सांगता-सिद्ध्यर्थं दिक्पालपूर्वकं आदित्यादि- नवग्रहमण्डल-स्थापित-देवताभ्यो बलिदानं करिष्ये ।।

मण्डपस्य पूर्वे । इन्द्राय नमः । गन्धं समर्पयामि । अक्षतान् समर्पयामि । पुष्पैः पूजयामि । ओं इन्द्राय सांगाय सपरिवाराय सायुधाय सशक्तिकाय इमं सदीपं दधिमाषभक्त-बलिं समर्पयामि । भो इन्द्र दिशं रक्ष बलिं भुंक्ष्व मम(यजमानस्य) सकुटुंबस्य अभ्युदयं कुरु आयुःकर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता वरदो भव । अनेन बलिदानेन इन्द्रः प्रीयताम् ।। १६.१

अग्निकोणे ।। अग्नये नमः । सर्वोपचार पूजां समर्पयामि । ओं अग्नये सांगाय+बलिं समर्पयामि ।। भो अग्ने वरदो भव । अनेन बलिदानेन अग्निः प्रीयताम् ।। १६.२

दक्षिणे ।। यमाय नमः । ओं यमाय +बलिं समर्पयामि+ यमः प्रीयताम् ।। १६.३

नैर्ऋत्यां ।। ओं निर्ऋतये नमः+ निर्ऋतिः प्रीयताम् ।। १६.४

पश्चिमे ।। ओं वरुणाय नमः + वरुणः प्रीयताम् ।। १६.५

वायव्याम् ।। ओं वायवे नमः+ वायुः प्रीयताम् ।। १६.६

उत्तरे ।। ओं सोमाय नमः+ सोमः प्रीयताम् ।। १६.७

ईशान्याम् ।। ओं ईशानाय नमः + ईशानः प्रीयताम् ।। १६.८

पूर्वेशानयोर्मध्ये ।। ओं ब्रह्मणे नमः + ब्रह्मा प्रीयताम् ।। १६.९

ऊर्ध्वे ।। ओं अनन्ताय नमः + अनन्तः प्रीयताम् ।। १६.१०

ग्रहवेदिसमीपे आदित्यादि–ग्रहाणां बलिः ।। ओं आदित्यादि–नवग्रहेभ्यो अधिदेवता प्रत्यधिदेवता–सहितेभ्यः सांगेभ्यः सपरिवारेभ्यः सशक्तिकेभ्यः इमं सदीप–दधिमाषभक्तबलिं समर्पयामि ।। भो भो आदित्यादि देवताः दिशो रक्षत, बलिं भक्षत, दीपानि पश्यत मम (यजमानस्य) सकुटुंबस्य अभ्युदयं कुरुत ।। आयुःकर्तारःक्षेमकर्तारः शान्तिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः निर्विघ्नकर्तारः वरदा भवत ।।

अनेन बलिदानेन आदित्यादि देवताः प्रीयन्ताम् ।। १६. ११

ततः षोडशमातृणां एकबलिं दद्यात् । ओं श्रीगौर्यादि मातृभ्य इमं सदीप–माषभक्त–बलिं समर्पयामि । भो भो गौर्यादि मातरः इमं बलिं गृह्णीत । मम (यजमानस्य) सकुटुम्बस्याभ्युदयं कुरुत आयुः कर्त्र्यः क्षेमकर्त्र्यः शान्तिकर्त्र्यः पुष्टिकर्त्र्यः तुष्टिकर्त्र्यः निर्विघ्नकर्त्र्यः वरदा भवन्तु ।। १६.१२

**क्षेत्रपाल बलिः** ।। वंशपात्रे कुशानास्तीर्य तदुपरि आहारद्विगुणं माषभक्तदध्योदनं जलपात्रं च निधाय–हरिद्राकुंकुम–सिन्दूर–कज्जल–द्रव्य–पताका–दीपयुतं कृत्वा ।। ओं ह्रीं क्षं क्षेत्रपालाय नमः । क्षेत्रपाल

महाबाहो महाबल–पराक्रम। क्षेत्राणां रक्षणार्थाय बलिं गृह्ण नमोस्तु ते।।
क्षं क्षेत्रपालाय सांगाय भूतप्रेत–पिशाच–डाकिनी–शाकिनी–
वेतालादि–परिवारयुताय सायुधाय सशक्तिकाय सवाहनाय इमं सदीप–
माष–भक्तबलिं समर्पयामि नमः।। भो भो क्षेत्रपाल सर्वतो दिशं रक्ष–
बलिं भक्ष–दीपं पश्य––मम (यजमानस्य) सकुटुम्बस्य अभ्युदयं कुरु
आयुः कर्ता क्षेमकर्ता शान्तिकर्ता पुष्टिकर्ता तुष्टिकर्ता निर्विघ्नकर्ता शुभदो
वरदो भव।। अनेन बलिदानेन क्षेत्रपालः प्रीयताम् ।। (इमं बलिं
अनवेक्ष्यमाणेन दुर्ब्राह्मणेन नीत्वा चतुष्पथे निक्षिपेत् । स यजमानोऽपि
तत्पृष्ठतो द्वारपर्यन्तं गत्वा जलं क्षिपेत् । हस्तौ पादौ प्रक्षाल्य आचम्य
आसनं उपविशेत् ।।) १६.१३।।

गणेशादि–देवतानां उत्तरपूजनम् ।। आवाहिताभ्यः सर्वाभ्यो देवताभ्यो नमः । धूपः । दीपः । नैवेद्यम् । नीराजनम् । शान्तिस्तवः ।।

ब्रह्मा मुरारिस्त्रिपुरान्तकारिः भानुः शशी भूमिसुतो बुधश्च ।
गुरुश्च शुक्रः शनि राहु केतवः सर्वे ग्रहाः शान्तिकरा भवन्तु ।। १६.१४

मूलमन्त्रेण होमदशांशेन दुग्धमिश्रित जलेन तर्पणं कुर्यात् ।। मूलं ।। चामुण्डायै तर्पयामि नमः ।। १६.१५

तेनैव मन्त्रेण तद्दशांशेन मार्जये ।। मूलं ।। (यजमानं) अभिषिंचामि नमः ।। इति प्रोक्षणम् ।। १६.१६

**पूर्णाहुतिः** ।। अद्य कृतस्य चण्डी–होमस्य संपूर्णता–सिद्ध्यर्थं

वसोर्धारा-समन्वितं पूर्णाहुति-होमं करिष्ये। होमावशिष्टेन आज्येन स्रुचं पूरयित्वा तदग्रे पुष्प-फल-तांबूल-वस्त्र-चन्दन-मालादि-सौभाग्यद्रव्ययुतं नारिकेलं निधाय। पूर्णाहुति-देवताभ्यो नमः इति संपूज्य। स्रुवेणाच्छाद्य उत्थाय तयोर्मूलं नाभौ कृत्वा मूलमन्त्रं वौषडन्तं पठित्वा ।। (ओं ऐं ह्रीं क्लीं चामुण्डायै विच्चे वौषट्)

अनंतरम् श्री सूक्तम्, दुर्गा सूक्तम् पठित्वा ।।

पूर्णाहुतिमुत्तमां जुहोति । सर्वं वै पूर्णाहुतिः। सर्वमेवाप्नोति।
अथो इयं वै पूर्णाहुतिः। अस्यामेव प्रतितिष्ठति।।

पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।।

**ओं ऐं ह्रीं क्लीं इतः** पूर्वं प्राण–बुद्धि–देह–धर्माधिका रतो जाग्रत्स्वप्न–सुषुप्त्यवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा ।।

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम् । ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्म–समाधिना ।।

वसोर्धारा ।। चमकम् ।। अथवा एकोऽनुवाकः शं च मे मयश्च मे + सूषा च मे सुदिनं च मे ।। वसोः पवित्रमसि शतधारं वसोः पवित्रमसि

सहस्रधारम् । देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुष्वाका मधुक्षः स्वाहा ।।

सप्त ते अग्ने समिधः सप्त जिह्वाः । सप्त ऋषयः सप्त धामप्रियाणि । सप्तहोत्राः सप्तधा त्वा यजन्ति । सप्तयोनीरापृणस्वा घृतेन स्वाहा ।।

आज्यपात्रमुत्तरतो निधाय । प्राणायामं कृत्वा । परिषेचनम् । प्रणीता प्रोक्षणान्तम् । ब्रह्मोद्वासनम् । उपस्थानम् । रक्षा ।।१७।।

**कुमारी पूजनम्** ।। (यजमानः पूजयेच्च कन्यानां नवकं शुभम् । द्विवर्षायादशाब्दान्ताः कुमारीः परिपूजयेत् ।।)

ओं मन्त्राक्षरमयीं देवीं मातॄणां रूपधारिणीम् । नवदुर्गात्मिकां साक्षात्कन्यामावाहयमाम्यहम् ।। ओं क्लीं कौमार्यै नमः। त्रिपुरायै नमः। कल्याण्यै नमः। रोहिण्यै नमः। कामिन्यै नमः। चण्डिकायै नमः। शांकर्यै नमः। दुर्गायै नमः। सुभद्रायै नमः।

ध्यायामि। आवाहयामि। आसनम् । पाद्यम् । अर्घ्यम् । आचमनीयम् । गन्धम् । कुंकुमम् । वस्त्रम् । भूषणम् । पुष्पम् । अमृतम् । अर्चनम् । धूपः। दीपः। नीराजनम् ।।

वन्दितांघ्रियुगे देवि सर्वसौभाग्यदायिनि।
रूपं देहि जयं देहि यशो देहि द्विषो जहि।। इति प्रार्थना।। ।। १८ ।।

सुवासिनी पूजा ।। ऐं ह्रीं क्लीं सुवासिन्यै पाद्यं अर्घ्यं गन्धं हरिद्राकुंकुमं वस्त्रं भूषणं पुष्पं च कल्पयामि नमः । अमृतम् । अर्चनम् । धूपः । दीपः । नीराजनम् ।

(या देवी सर्वभूतेषु मातृरूपेण संस्थिता । नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ।। ) ।। १९ ।।

विप्रेभ्यो दक्षिणां दत्त्वा देवीं पंचोपचारैः संपूज्य ।। ।। २० ।।

**महाबलिदानम् ।।**

विप्रेण कूष्माण्डो बिल्वमिक्षवश्च देयाः ।। देवीमुखं बलिं गन्धादिना अभ्यर्च्य । चण्डिकाप्रीतिदानेन दातु आपद्विनाशनम् । चामुण्डा–

बलिरूपाय बले तुभ्यं नमोऽस्तु ते ।। ऐं ह्रीं श्रीं मन्त्रपुष्पं समर्पयामि ।।

कूष्माण्डबलिं छेदयित्वा ।। देव्यै निवेद्य ।। बलिशेषं रक्षेभ्यो हरेत् ।। २१

मा विघ्नं मा च मे पापं मा सन्तु परिपन्थिनः ।

सौम्या भवन्तु तृप्ताश्च भूतप्रेताः सुखावहाः ।।

महिषघ्नि महामाये चामुण्डे मुण्डमालिनि ।

आयुरारोग्यमैश्वर्यं देहि देवि नमोऽस्तु ते ।। २२

अभिषेचनम् ।। तत आचार्यादयः कलशोदकेन सपत्नीकं सकुटुंबं यजमानं आपोहिष्टादि- मन्त्रेण अभिषिंचेयुः ।

सरितः सागराः शैलास्तीर्थानि जलदा नदाः ।।

एते त्वामभिषिंचन्तु सर्वकामार्थ सिद्धये ।।

प्रार्थना । ततः तिलकं धृत्वा 'सर्वस्वरूपे' इति पंचभिश्च स्तुत्वा नमस्कृत्य पुष्पांजलिं दतत्त्वा प्रार्थयेत् ।।

सर्वस्वरूपे सर्वेशे सर्वशक्ति–समन्विते ।

भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ।।

एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ।

पातु नः सर्वभीतिभ्यः कात्यायनि नमोऽस्तु ते ।

ज्वालाकरालमत्युग्रमशेषासुर–सूदनम् ।

त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ।।

हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ।

सा घण्टा पातु नो देवि पापेभ्योऽनः सुतानिव ।।

असुरासृग्वसापंक–चर्चितस्ते करोज्वलः ।
शुभाय खड्गो भवतु चण्डिके त्वां नता वयम् ।। ।। २३ ।।

समर्पणम् ।।

गुह्याति–गुह्य–गोप्त्री त्वं गृहाणास्मत्कृतं हवम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्मयि स्थिरा ।। ।। २४ ।।

इति देवी–वामकरे जलसमर्पणं कृत्वा मूलेन पुष्पेण देवीमुद्वास्य नासया

हृदि प्रतिष्ठितं विभाव्य षडंगन्यासं कुर्यात् ।।

विसर्जनम् ।।

उत्तिष्ठ देवि चण्डेशि शुभां पूजां प्रगृह्य च ।
कुरुष्व मम कल्याणं अष्टभिः शक्तिभिः सह ।। ।। २५ ।।

आचार्यसंभावना ।। आशीर्वादः ।

कृतकर्मणः सांगता–सिद्ध्यर्थं कुमारी–ब्राह्मण–सुवासिनीश्च
भोजयित्वा तेषामाशिषः प्राप्य तदनुज्ञया भूञ्जीत ।। ।। २६ ।।

।।शुभम् ।।

# अध्याय समाप्ति होम द्रव्याणि

| अध्यायः | देवता | हवनाहुति |
| --- | --- | --- |
| प्रथम | वाग्भवबीजाधिष्ठात्री महाकाली | कपित्थफलं |
| द्वितीय | लक्ष्मीबीजाधिष्ठात्री महालक्ष्मी | नारिकेलं |
| तृतीय | अष्टाविंशति वर्णात्मिका महालक्ष्मी | मधु+पुष्पं |
| चतुर्थ | त्रिवर्णात्मिका शक्तिलक्ष्मी | पूगीफलं |
| पञ्चम | विष्णुमायादि त्रयोविंशति देवता | बहुबीज फलं |
| षष्ठ | शताक्षी धूम्राक्षी | नारङ्गफलं |

| | | |
|---|---|---|
| सप्तम | कर्पूरबीजाधिष्ठात्री कलीचामुण्डा | कूष्माण्ड |
| अष्टम | अष्टमातृका सहिता रक्ताक्षी | इक्षुखण्डं |
| नवम | वाग्भवबीजाधिष्ठात्री महाकाली | कुष्माण्ड+इक्षुखण्डं |
| दशम | सिंहवाहिनि त्रिशूलपाशधारिणी | नारङ्गफलं |
| एकादश | सर्वनारायणी | मातुलुङ्गफलं |
| द्वादश | बाला त्रिपुरसुन्दरी | बिल्व फलं |
| त्रयोदश | श्रीविद्या महात्रिपुरसुन्दरी | रक्तकदलीफलं |

# सिद्धकुञ्जिकास्तोत्रं

ओं अस्य श्री कुञ्जिकास्तोत्र मन्त्रस्य सदाशिव ऋषिः अनुष्टुब्छन्दः श्रीत्रिगुणात्मिका देवता ।। ओं ऐं बीजं ओं ह्रीं शक्तिः ।। ओं क्लीं कीलकम् ।। मम सर्वाभीष्टसिद्ध्यर्थे जपे विनियोगः ।।

शिव उवाच

श्रृणु देवि प्रवक्ष्यामि कुञ्जिकास्तोत्रमुत्तमम् ।
येन मन्त्रप्रभावेण चण्डीजापः शुभो भवेत् ।। १

न कवचं न अर्गला स्तोत्रं न कीलकं न रहस्याम् ।
न सूक्तं नापि वा ध्यानं न न्यासो न वार्चनम् ।। २

कुञ्जिका पाठ मात्रेण दुर्गापाठ फलं लभेत् ।
अति गुह्यतरं देवि देवानामपि दुर्लभम् ॥ ३

गोपनीयं प्रयत्नेन स्वयोनिरिव पार्वति।
मारणं मोहनं वश्यं स्तम्भनोच्चाटनादिकम् ॥ ४

पाठमात्रेण संसिद्धयेत् कुञ्जिकास्तोत्रमुत्तमम् ॥ ५

अथ मन्त्रः

ओं श्रूं श्रूं श्रूं शं फट् ऐं ह्रीं क्लीं ज्वल उज्वल प्रज्वल
ह्रीं ह्रीं क्लीं स्रावय स्रावय (स्रावय –आदय) शापं नाशय नाशय
श्रीं श्रीं श्रं जुं सः सादय सादय स्वाहा ॥ १

ओं श्लीं (श्लों) हुं क्लीं ग्लां (ग्लौं) जूं सः ज्वलोज्ज्वल
मन्त्र प्रवल हं सं लं क्षं फट् स्वाहा २

नमस्ते रुद्ररूपायै नमस्ते मधुमर्दिनि ।
नमस्ते कैटभनाशिन्यै (कैटभघ्नि च)नमस्ते महिषार्दिनि
नमस्ते शुम्भ(हन्त्र्यै)हन्त्रि च निशुम्भासुरप्रान्तिनि
नमस्ते जाग्रते देवि जपे सिद्धिं कुरुष्व मे ।। ३

ऐंकारी सृष्टिरूपिण्यै ह्रींकारी प्रतिपालिका ।
क्लीं काली कालरूपिण्यै बीजरूपे नमोऽस्तुते ।
चामुण्डा चण्डघातीच (चण्डरूपा) यै कारी कारी वरदायिनि
विच्चे त्वभयदा (नो भयदा) नित्यं नमस्ते मन्त्ररूपिणि

धां धीं धूं धूर्जटेः पत्नी वां वीं वागीश्वरी तथा ।। ४

क्रां क्रीं (क्रुं) क्रूं कुञ्जिका देवि शां शीं शुभे (शुं मे) शुभं कुरु

हूं हूं हूंकार रूपायै जां जीं जूं भालनादिनी ।

भ्रां भ्रीं भ्रूं भैरवी भद्रे भवान्यै ते नमो नमः ।। ५

ओं अं कं चं टं तं पं सां विदुरां विदुरां

विमर्दय विमर्दय हं क्षां क्षीं स्त्रीं जीवय जीवय

त्रोटय त्रोटय जंभय जंभय दीपय दीपय

मोचय मोचय हुं फट् जां वौषट् ॥ ६

ऐं ह्लीं क्लीं रंजय रंजय सञ्जय सञ्जय गुञ्जय गुञ्जय

बन्धय बन्धय भ्रां भ्रीं भ्रूं भैरवी भद्रे सङ्कुच सङ्कुच सञ्चल

सञ्चल त्रोटय त्रोटय म्लीं स्वाहा ।। ७

पां पीं पूं पार्वती पूर्णा खां खीं खूं खेचरी तथा ।
म्लां म्लीं म्लूं मूलविस्तीर्णा कुञ्जिकायै नमो नमः ।। ८

सां सीं सप्तशतीदेव्या मन्त्रसिद्धिं कुरुष्वमे ।
इदं तु कुञ्जिकास्तोत्रं (कुञ्जिका स्तोत्र हेतवे) मन्त्रजागृतहेतवे ।। ९

अभक्ताय न दातव्यं गोपितं रक्ष पार्वति ।
विहीना कुञ्जिकादेव्या यस्तु सप्तशतीं पठेत् ।
न तस्य जायते सिद्धिर्ह्यरण्ये रुदितं यथा ।। १०

।। इति रुद्रयामले गौरीतन्त्रे शिवपार्वती संवादे सिद्धकुञ्जिकास्तोत्रं सम्पूर्णम् ।।

# पारायण पद्धतिः

## दशाङ्ग पारायणविधिः (हरगौरीतन्त्रम्)

न्यासो ध्यानावाहने च नामसूक्तं चाप्यनु ।
दलं च हृदयं चैव कवचार्गलकीलकम् ।।
दशाङ्गमेताद्विज्ञेयं इतिगुह्यं सनातनम् ।
दशाङ्गानि च जप्त्वा तु पश्चात्सप्तशतीं पठेत् ।।

## नवाङ्ग पारायणविधिः

न्यासमावाहनं चैव नामान्यर्गलकीलकम् ।
हृदयं च दलं चैव ध्यानं कवचमेव च ।।

माहात्म्यं च जपेन्नित्यमष्टम्यां च विशेषतः ।
सौभाग्यं च लभेन्नित्यं नरो मुच्येत संकटात् ।।

## न्यासः

अस्य श्री न्यास–महामन्त्रस्य मार्कण्डेय ऋषिः।
अनुष्टुप् छन्दः। महाकाली महालक्ष्मी महासरस्वत्यो देवताः ।
ह्रीं श्रीं क्लीं बीजानि । इष्टार्थसिद्ध्यर्थे जपे विनियोगः–

| | | | |
|---|---|---|---|
| पादयोः वाराह्यै | नमः | नितंबे नारसिंह्यै | नमः |
| जङ्घयोः ब्रह्माण्यै | नमः | नाभौ चामुण्डायै | नमः |
| ऊर्वोः रुद्राण्यै | नमः | जठरे पार्वत्यै | नमः |

उरसि शिवदूत्यै नमः
वामभुजे महेश्वर्यै नमः
दक्षिणभुजे वैष्णव्यै नमः
वामकक्षे काल्यै नमः
दक्षिणकक्षे –रक्तदन्तिकायै नमः
हृदये शिवायै नमः

कण्ठे माहेन्द्र्यै नमः
मुखे कात्यायन्यै नमः
शिरसि वाराह्यै नमः
पृष्ठे शताक्ष्यै नमः
भूमौ शाकंभर्यै नमः
अन्तरिक्षे कौशिक्यै नमः
सर्वाङ्गेषु श्रीचण्डिकायै नमः

अकारादि क्षकारान्त बीजाक्षर महेश्वरी ।
यक्ष राक्षस वेताल शाकिनी डाकिनी गणैः ।। १

भूतप्रेत पिशाचैश्च विद्याधर समन्विता ।
कालरात्री जगन्मूर्तिः सदानन्द स्वरूपिणी ॥ २

ऐं ह्रीं क्लीं कवचाश्चवत्रिवृद्धाह्याश्च शाम्भवी ।
विन्यसेन्मूर्ध्नि कामाक्षीं दुर्गां देवीं ललाटके ॥ ३

भ्रुवोर्मध्ये भद्रकालीं चक्षुर्मध्ये महेश्वरीं ।
वाराहीं नासिकायां च कौमारीमोष्ठयोर्न्यसेत् ॥ ४

दन्तेषु नारसिंहीं च जिह्वायां चण्डिकां न्यसेत् ।
श्रोत्रद्वये न्यसेद्गौरीं कण्ठमध्ये तु वैष्णवीं ॥ ५

हृदये च महालक्ष्मीं स्तनमध्ये तु पार्वतीं ।

वक्ष:स्थले भगवतीं बाहुमूले तु शांभवीं ।। ६

बाहुमध्ये भद्रकालीं अंगुलीषु च मालिनीं ।
ब्रह्माणीं नाभि मध्ये तु कटिमध्ये तु यक्षिणीं ।। ७

जंघाद्वये तथा गौरीं जानुमध्ये तु शाङ्करीं ।
गुल्फद्वये च मातङ्गीं विजयां पादयोस्तथा ।। ८

चामुण्डां रोमकूपेषु चर्मादिषु च भैरवीं ।
रुधिरादिषु चेन्द्राणीं पुष्टांगीं सर्वसन्धिषु ।। ९

सर्वांगेषु च वाग्देवीं पृष्ठे ज्येष्ठां न्यसेत् क्रमात् ।। १०

इति न्यासः

# ध्यानम्

मातर्मे मधुकैटभघ्नि महिष–प्राणापहारोद्यमे
हेलानिर्मित–धूम्रलोचनवधे हे चण्डमुण्डार्दिनी।
निश्शेषीकृत–रक्तबीज–दनुजे नित्ये निशुंभापहे
शुंभध्वंसिनि– संहाराशु दुरितं दुर्गे नमस्तेऽम्बिके ।। १

अष्टौभुजाङ्गीं महिषस्य मर्दिनीं सशंखचक्रां शरशूलधारिणीं ।
तां दिव्ययोगीं सहजातवेदसीं दुर्गां सदा शरणमहं प्रपद्ये।। २

महिष–मस्तक–नृत्तविनोदन–स्फुट–रणन्मणि–नूपुर–मेखला।
जनन–रक्षण–मोक्ष–विधायिनि जयतु शुंभनिशुंभनिषूदिनी ।। ३

ब्रह्माणी कमलेन्दु–सौम्यवदना माहेश्वरी लीलया ।
कौमारी रिपुदर्पनाशकरी चक्रायुधा वैष्णवी ।।
वाराही घनघोर–घर्घरमुखी दंष्ट्री च वज्रायुधा ।
चामुण्डा गणनाथ–रुद्र–सहिता रक्षन्तु मां मातरः। ४

उद्धृतौ मधुकैटभौ महिषासुरं च निहत्य तं ।
धूम्रलोचन–चण्ड–मुण्डक–रक्तबीज–मुखांश्च तान् ।।
दुष्ट–शुंभ–निशुंभ–मर्दिनि नन्दितामरवन्दिते ।
विष्टप–त्रय–तुष्टिकारिणि भद्रकालि नमोऽस्तुते ।। ५

लक्ष्मीप्रदानसमये नवविद्रुमाभां
विद्याप्रदानसमये शरदिन्दु–शुभ्राम् ।

विद्वेषि–वर्ग–विजयेऽपि तमालनीलां
देवीं त्रिलोकजननीं शरणं प्रपद्ये ।। ६

चन्द्रहासं त्रिशूलं च शंख–चक्र–गदांस्तथा ।
धनुर्बाणं च मुसलं पिङ्गलं मुष्टिमेव च ।। ७

पाशाङ्कुश–भुशुण्डीश्च मुद्गरं परशुं तथा ।
वज्रायुधं च कुन्तं च खट्वाङ्गं च हलायुधम् ।। ८

तूणीरं क्षुरिकां मुद्रां तोमरं पानपात्रकं ।
पट्टिसं दण्डनागं च कुन्ददन्तौ तथैव च ।। ९

दर्पणं रुद्रवीणां च बिभृद्द्वात्रिंशदोस्तलाम् ।
पद्मरागप्रभां देवीं बालार्क–किरणारुणाम् ।। १०

रक्तवस्त्र–परीधानां रक्तमाल्यानुलेपनाम् ।
दशपादांबुजां देवीं दशमण्डलपूरिताम् ।। ११

दशाननां त्रिनेत्रां च समुन्नत–पयोधराम् ।
एवं ध्यायेन्महाज्वालां महिषासुरमर्दिनीम् ।। १२

सर्वदारिद्र्य–शमनीं सर्वदुःख–निवारिणीम् ।
ब्रह्माण्डमध्यजिह्वां तां महावक्त्र–करालिनीम् ।। १३

दशसाहस्त्र–दोर्दण्डां नानाशस्त्रास्त्रधारिणीम् ।
विचित्रायुध–सन्नद्धां विश्वरूपां शिवात्मिकाम् ।। १४

दानवान्तकरीं देवीं रक्तबीजवधोद्यताम् ।
रक्तवस्त्रधरां चण्डीं भीषणामतिभैरवाम् ।। १५

संपूर्णयौवनां लक्ष्मीं कालिकां कमलाननाम् ।
मधुकैटभ–संहारीं महीषासुरमर्दिनीम् ।। १६

चण्ड–मुण्ड–शिरश्छेत्रीं सर्वदैत्यनिषूदिनीम् ।
रक्तबीजस्य संहर्त्रीं अशेषासुरभक्षिणीम् ।। १७

निशुंभ–शुंभ–मथनीं अशेषायुधभीषणाम् ।
महाब्रह्माण्डमालाङ्गीं सर्वाभरणभूषिताम् । १८

वेतालवाहनारूढां सिंह–व्याघ्रादिवाहनाम् ।
नररक्तप्रियां मायां मधुमांसोपहारिणीम् ।। १९

य इदं शृणुयान्नित्यं त्रिसन्ध्यं यः पठेन्नरः ।
ऋणकोट्यपहरणं रोगदारिद्र्यनाशनम् ।। २०

सर्वसिद्धिकरं पुण्यं सर्वकामफलप्रदम् ।
भक्तानन्दकरीं देवीं परब्रह्मस्वरूपिणीम् ।। २१

तामष्टादशपीठस्थां त्रिपुरामधि-देवताम् ।
वन्दे विश्वेश्वरीं देवीं भुक्तिमुक्ति-फलप्रदाम् ।। २२

इदं सप्तशतीध्यानं सर्वरक्षाकरं नृणाम् ।
रसं रसायनं सिद्ध्येद् गुलिकाञ्जनसिद्धिदम् ।। २३

पादुकायुगलं सिद्ध्येत् मन्त्रसिद्धिकरं नृणाम् ।
सौन्दर्य-राज-सम्मान-पुत्रपौत्राभिवर्धनम् ।। २४

ऐश्वर्य-लाभ-विजय-भुक्ति-मुक्ति फलप्रदाम् ।
सदा सन्निहितां लक्ष्मीं चण्डिकां मम देवताम् ।। २५

स्मरेन्नित्यं प्रयत्नेन षण्मासात् प्राप्यते फलम् ।
महाभयापहरणं शत्रुक्षयकरं तथा ।। २६

अचलां श्रियमाप्नोति सर्वव्याधिविनाशनम् ।
अन्ते स्वर्गश्च मोक्षश्च सत्यमेव न संशयः ।। २७

इति ध्यानम्

# आवाहनम्

मन्त्राक्षरमयीं देवीं मातृकारूपधारिणीं ।
नवदुर्गात्मिकां साक्षात् कन्यामावाहयाम्यहम् ।।

(मनसि देव्याः आवाहनं भावयेत् )

इति आवाहनम्

# नामानि

श्रीदेवीनाम्नां अगस्त्य ऋषिः। महाविराट् छन्दः । चिन्तामणि महा विद्येश्वरी देवता। ऐं बीजं । क्लीं शक्तिः । सौः कीलकं । महामाया प्रसादसिद्ध्यर्थे जपे विनियोगः

## ध्यानम्

अष्टौभुजांगीं महीषस्य  मर्दिनीं सशंखचक्रां शरशूलधारिणीं ।
तां दिव्ययोगीं सहजातवेदसीं दुर्गां सदा शरणमहं प्रपद्ये ।।

## लमित्यादि पञ्चपूजा

लं  पृथिव्यात्मिकायै  गन्धं  समर्पयामि
हं  आकाशात्मिकायै  पुष्पाणि  समर्पयामि
यं  वाय्वात्मिकायै  धूपं  आघ्रापयामि
रं  अग्न्यात्मिकायै  दीपं  दर्शयामि

| | | |
|---|---|---|
| वं अमृतात्मिकायै | अमृतं महानैवेद्यं | निवेदयामि |
| सं सर्वात्मिकायै | सर्वोपचारपूजाम् | समर्पयामि |

ततः पारायणं कुर्यात्

ओं ऐं दिव्ययोगी महायोगी सिद्धयोगी गणेश्वरी ।
प्रेताशी डाकिनी काली कालरात्री निशाचरी ।। १

झङ्कारी चोर्ध्ववेताली पिशाची भूतडामरी ।
ऊर्ध्वकेशी विरूपाक्षी शुक्लाङ्गी नरभोजिनी ।। २

राक्षसी घोररक्ताक्षी विश्वरूपी भयङ्करी ।
चामुण्डी वीरकौमारी वाराही मुण्डधारिणी ।। ३

भ्रामरी रुद्रवेताली भीष्मरी त्रिपुरान्तकी ।
भैरवी ध्वंसिनी क्रोधी दुर्मुखी प्रेतवाहिनी ।। ४

खट्वाङ्गी दीर्घलंबोष्ठी मालिनी मन्त्रयोगिनी ।
कौशिकी मर्दिनी यक्षी रोमजङ्घाप्रहारिणी ।। ५

कालाग्निग्रामणी चक्री कङ्काली भुवनेश्वरी ।
फट्कारी वीरभद्रेशी धूम्राक्षी कलहप्रिया ।। ६

कण्टकी नाटकी मारी यमदूती करालिनी ।
सहस्राक्षी कामलोला काकदंष्ट्री त्वधोमुखी ।। ७

धूर्जटी विकटी घोरी कपाली विषलङ्घिनी ।

चतुःषष्टिस्समाख्याता योगिन्यो वरसिद्धिदाः ।।

नित्यं स्मरणमात्रेण सर्वपापक्षयो भवेत् ।।

इति नामानि

# सरस्वति सूक्तम्

ओं अस्य श्रीत्रिमूर्तिमहासरस्वतीसूक्तस्य ब्रह्मा ऋषिः।।
त्रिष्टुबनुष्टुब्जगत्यश्छन्दांसि श्रीमहासरस्वती देवता श्रीमहासरस्वती प्रसादसिद्ध्यर्थे जपे विनियोगः ।। अथ षडङ्गन्यासः ।।

ओं क्लां अङ्गुष्ठाभ्यां नमः ।। ओं क्लीं तर्जनीभ्यां नमः ।।
ओं क्लूं मध्यमाभ्यां नमः ।। ओं क्लैं अनामिकाभ्यां नमः ।।
ओं क्लौं कनिष्ठिकाभ्यां नमः ।। ओं क्लः करतलकरपृष्ठाभ्यां नमः ।।

## अथ ध्यानम्

गौरीदेहसमुद्भवां शशिधरां क्लीं सात्त्विकीं सत्प्रियां
बाणेक्षुं मुसलं त्रिशूलवरदं शङ्खं च घण्टां करैः ।
बिभ्राणां हल कार्मुकं सुविलसत्सौन्दर्यरूपां परां
पद्माभां हि निशुम्भशुम्भमथिनीं वन्दे महाशारदाम् ।।

राजोवाच

मुने कथय सर्वज्ञ भूयः किञ्चिदनुत्तमम् ।
तत्त्वमेतस्य सर्वस्य येन सिद्धिरवाप्यते ।। १

ऋषिरुवाच

भूयः श्रृणुमहाभाग देवीमाहात्म्यमुत्तमम् ।
विना येन स्तवश्चायं निर्जीवो नृपनन्दन ॥ ३

दृष्ट्वा शुम्भं विनिहतं दारुणं देवकण्टकम् ।
आजग्मुःपरमानन्दाद् ब्रह्मविष्णुमहेश्वराः ॥ ४

देव्याः स्तुतिं समाधातुं गणानालक्षसंयुताः ।
आज्ञामादाय देवेशाः कर्तुं दर्शनमादरात् ॥ ५

बद्धाञ्जलिपुटाः साक्षात् तुष्टुवुः क्रमशः शिवाम् ।
लोकानां च हितार्थाय देवीसूक्तानि पार्थिव ॥ ६

ब्रह्मा सरस्वतीसूक्तं लक्ष्मीसूक्तं जनार्दनः ।
सूक्तं तथा महाकाल्याः शङ्करः स्वयमब्रवीत् ।। ७

ब्रह्मोवाच

अजां पुराणीममरासनातनीं चतुर्भुजां पुस्तकाक्षधारिणीम् ।
वराभयाभ्यामनुशोभिहस्तां नमामि तां जाड्यजराविनाशिनीम् ।। ८

सरस्वतीं तामनुनौमि वाचं वाचःप्रदां हंसवराधिरूढाम् ।
मुक्तामणिद्योतितकण्ठहारां भाग्यैकलभ्यां परमां पवित्राम्।। ९

श्रीकण्ठशक्तित्रयशोभमानां दशारतूर्येणकृतानुरूपाम् ।
पञ्चारवासां धृतखड्गहस्तां सरस्वतीं तां प्रणमामि देवीम्।। १०

कलाढ्ययन्त्रां मणिकोटिहारां विहारयन्त्रां विलसैकशोभाम्।
स्वच्छां चिदाभां स्फटिकानुरूपां सरस्वतीं तां प्रणमामि देवीम् ।। ११

वाक्कामकायैः परमैः पवित्रैः रमारमाह्रींवरदानदक्षैः ।
बीजैरमीभिःकपिबीजयुक्तैः क्लींयुग्ममिश्रैरितिमन्त्रराजः।। १२

एकेनचैकेन च युग्मकेन द्वाभ्यामथैकेन तथैव शेषैः ।
कराङ्गलिस्थैः परमोत्तमोऽयं निहन्ति पापानि च साधकानाम्।। १३

हठेन वै श्रृङ्खलया च श्रेण्या विधातृपत्न्या च तथैववाचा ।
श्रींक्लींसुवन्द्या किल शोभया च न्यासैरमीभिः परितोऽपि शम्भुः।। १४

द्रव्येणहोमात्सकलार्थसिद्धिः सुकिङ्शुकैर्वागपिसिद्धिमृच्छेत् ।
तत्साकमाज्येन रमानिवासः सुपायसेनापि च वेदसिद्धिः।। १५

न चाम्ब ते महिमानं विदामः सरस्वतीं तां प्रथितं च लोके ।
जानन्ति किम्बुद्बुदभूमितोये जडा वयं ब्रह्महरीशमुख्याः।। १६

तथैव वाचा च वयं वदामो जिघ्रामशक्ताहि तथैव जीवाः ।
पश्याम हे रूपमिदं महेशि स्पृशामि साक्षात्तव पादयुग्मम्।। १७

स्वादंविदामस्तवशक्तियोगात् गृह्णीम हे तव शक्त्या महेशि।
गच्छाम हे तव शक्तिप्रभावादानन्दयुक्तास्त्वयि संनिवेशात् ।। १८

आत्मामनस्त्वं त्वमेवासिदेहस्त्वमेव पञ्चेन्द्रियपञ्चतत्त्वम् ।
साम्नां त्वमेव विषयःसमुख्यःपरापरात्मा सकलं त्वमेव।। १९

रविश्च ते चन्द्रमाश्च ते तारकाश्च ते भूमिश्च ते जलंच ते तेजश्च ते वायुश्च ते नभश्च ते शब्दश्च ते स्पर्शश्च ते रूपंच ते रसश्च ते गन्धश्च ते श्रोत्रंच ते त्वक्च ते
चक्षुश्च ते जिह्वाच ते घ्राणंच ते प्राणश्च ते ऽपानश्च ते समानश्च ते व्यानश्च ते उदानश्च ते नागश्च ते कूर्मश्च ते कृकलश्च ते देवदत्तश्च ते धनञ्जयश्च ते भूतात्माच ते परमात्माच ते विद्यात्माच ते सर्वात्माच ते त्वय्येव चित्तं विनिवेशयन्ताम्।। २०

यदा न चाहं भुवनानि जीवा न चास्तिविष्णुर्न च पार्वतीशः।।
न चेश्वरो नापि सदाशिवश्च त्वमेव चासीरितिवाभविष्या ।।
पञ्चस्वरावापिसदाशिवस्य त्वमेव चासीस्सुशिवा भाविष्यसि।। २१

कालस्त्वमेवासि जगत्त्रयाणां स्वभावतुर्यादि कलात्वमेव।
त्वमेववविश्वं च परात्मशक्तिर्नमामि ते पादयुगं सरस्वति।। २२

त्वमेववाणी निखिलाश्चवेदास्त्वंशब्दशक्तिश्च तथार्थशक्तिः।
त्वंब्रह्मविद्यासि परापरेशी त्वांब्रह्मशक्तिं शरणंप्रपद्ये ।। २३

सूक्तं तवेदं सुभगे सरस्वति प्रातश्च मध्याह्न इहेतिसायम् ।
पठन्ति येशुद्धधियःसुचित्ताःश्रीभोगमोक्षान् सहसा लभन्ते।। २४

न ते कुयोनिं न दरिद्रतां च कर्ह्यात्मतापं न च ते लभन्ते ।
त एव धन्याश्च त एव पूज्याः सर्वत्र सन्मानयुताभवन्ति॥ २५

इदं शरण्यं विरजं सुधामयं तत्त्वस्वरूपं जगतां त्रयाणाम् ।
ते प्राप्नुवन्ति प्रकटप्रभावास्त्वां सर्वयोनीं शरणंप्रपद्ये ॥ २६

ऋषिरुवाच

स्तुत्यानया देववाण्या सर्वसारस्वरूपया ।
प्रसन्ना देवदेवेशी महापूर्वासरस्वती ॥ २७

आविर्भूतामहादेवी ब्रह्मसंतोषकारिणी ।
उवाच वचनं दिव्यं ब्रह्मानन्दप्रदायकम् ॥ २८

श्रीदेव्युवाच

स्तुत्यानया च ते ब्रह्मन् भृशं तोषसमन्विता ।
प्रीतास्मि व्रियतां देव वरं संतोषकारकम् ।। २९

ब्रह्मोवाच

त्वदर्चने मनो देवि दृढं भवतु सर्वदा ।
एष एव वरःसाक्षादुत्तमो व्रियते मया ।। ३०

स्वसूक्तैश्चापिदेवेशि तेजो दिव्यं विधीयताम् ।
येन कार्याणि सिध्यन्ति साधकानां महात्मनाम् ।। ३१

श्रीदेव्युवाच

सर्वदा ते मनोदेव कुलधर्मे सुपूजिते ।
दृढंभवतुसूक्तेन प्रसादान्मे परन्तप ।। ३२

सर्वसिद्धिप्रदं चास्तु परमानन्ददायकम् ।
विनासूक्तं पठेद्यस्तु स्तोत्रं सप्तशतीं तथा ।। ३३

मातृगामी सविज्ञेयो नरकावासतत्परः ।
ममावज्ञापराधेन ब्रह्मघ्नानां गतिं व्रजेत् ।। ३४

ऋषिरुवाच ।। ३५

एवमुक्त्वा वचोदेवी तूष्णीमासीन्नृपोत्तम ।। ३६

इति सरस्वती सूक्तं सम्पूर्णम्

# श्री लक्ष्मीसूक्तम्

अथाञ्जलिंसमाधाय हरिः प्रोवाचविश्वकृत् ।।

श्रीविष्णुरुवाच ।। १

परापरेशांजगदादिभूतां वरांवरेण्यां वरदांवरिष्ठाम् ।

वरेश्वरीं तां विबुधैःप्रगीतां त्वांविश्वयोनिं शरणंप्रपद्ये ।। २

श्रियंसमस्तैरधिवासभूतां महासुलक्ष्मींधरणीधरांच ।

अनादिमादिम्परमार्थरूपा त्वांविश्वयोनिं शरणंप्रपद्ये।। ३

एकामनेकां विविधासुकार्यां सुकारणीं सदसद्रूपिणीं च।

कल्याणरूपां हि शिवप्रदांच त्वांविश्वयोनिं शरणंप्रपद्ये।। ४

सर्वाशयां सर्वजगन्निवासां श्रीमन्महालक्ष्मीसुरादिदेवीम् ।
शक्तिस्वरूपा च शिवस्वरूपां त्वांविश्वयोनिं शरणंप्रपद्ये।। ५

कामाभिधां त्वामधिवासभूतां ह्रींरूपिणीं मन्मथबीजयुक्ताम् ।
कलाढ्यबीजां परमार्थसंज्ञां रमां विशालां कमलाधिवासाम्।। ६

वैश्वानरश्रीसहितेनदेवीं श्रीमन्त्रराजेनविराजमानाम् ।
सर्वार्थदात्रीं परमांपवित्रां त्वांविश्वयोनिं शरणंप्रपद्ये।। ७

त्रिकोणपञ्चारयुतप्रभावां षट्कोणमिश्रद्विदशारयुक्ताम् ।
अष्टारचक्राधिनिवासभूतां त्वांविश्वयोनिं शरणंप्रपद्ये।। ८

पुनर्दशारद्वितयेनयुक्तां पञ्चारकोणाङ्कितभूगृहाञ्च।
यन्त्राधिवासामपियन्त्ररूपां त्वांविश्वयोनिं शरणंप्रपद्ये।। ९

सम्भाविताां सर्वसुरैरगम्यां सर्वस्वरूपामपिसर्वसेव्याम् ।
सर्वाक्षरन्यासवशावरिष्ठां त्वांविश्वयोनिं शरणंप्रपद्ये।। १०

सृष्टिस्थितिप्रलयाख्यैश्चबीजैर्न्यासंविधायाऽत्र जपन्ति येत्वाम् ।
त एव राजेन्द्र निघृष्टपादा विद्याधरेन्द्रस्य यशो लभन्ते।। ११

प्रपूज्ययन्त्रं विधिनामहेशि पुण्यांसुपूज्यां परमांसुभाग्याम् ।
जपन्तियेत्वां विविधार्थदात्रीं त एवधन्याः कुलमार्गनिष्ठाः।। १२

जानन्ति के पशवस्त्वां कुरूपा ब्रह्मादिगीतो महिमामहेशि।
केचिन्महान्तो निजधर्मभाजो जानन्ति ते देवि परंसुधाम।। १३

विधायकुण्डं विदिनासुवेदिं सौगन्धहोमं सफलं चकुर्वते।
त्वत्तोषणाज्जायते भाग्यतन्त्रं तेषांतु देवैरपि योगगम्यम्।। १४

पुनः स्तुवन्ति प्रयताश्चदेवीं स्तोत्रैरुदारैः कुलयोगयुक्ताः।
त एव धन्याः परमार्थभाजो भोगं च मोक्षं च करोति तेषाम्।। १५

ऋषिरुवाच ।।

इति स्तुत्वावसाने तु महालक्ष्मीं ददर्श सः।
चतुर्भुजां त्रिनयनां महिषासुरघातिनीम् ।। १६

अस्य श्रीमन्महालक्ष्मीः प्रसन्नास्तुतिगौरवात् ।
उवाचस्मितशोभाढ्या नारायणमजा शिवा ।। १७

देव्युवाच।।

वरं वरय देवेश नारायण सनातन ।
दास्याम्यद्याभिधातव्यं तव स्तुत्या वशीकृता ।। १८

श्रीविष्णुरुवाच ।।

मातः परमकल्याणि महालक्ष्मि वरप्रदे ।
कुलाचारेमनोमेऽस्तु वरस्तेकृपयाशिवे ।। १९

तवसूक्तं च फलं भवतुप्रीतिदायकम् ।।

श्री देव्युवाच ।। २०

एवमस्तु महाभाग नारायण सनातन ।। २१

सूक्तमेतद्विनायस्तु पठेत्सप्तशतींनरः ।

स प्राप्नोति महाघोरं नरकं दारुणं किल ।। २२

लभते परमव्याधिं मम कोपविघूर्णितः ।

लक्ष्मीसूक्तं विना यस्तु स्तोत्रंसप्तशतीं पठेत् ।। २३

ऋषिरुवाच ।।

एवमुक्त्वा वचोदेवी तूष्णीम्भूय गतानृप ।। २४

इति श्री लक्ष्मीसूक्तम् संपूर्णम्

# श्री कालीसूक्तम्

ततोऽञ्जलिंसमाधाय शिवः स्तोत्रमुदाहरत्
तुष्टाव वाग्भिर्दिव्याभिर्महाकालींमहेश्वरः
वेदवाण्या च संस्तुत्या लोकानां हितकाम्यया ।। १

श्रीमहादेव उवाच ।।

शिवाममर्त्यो विविधप्रभावां कालींकलामालिनि विश्वविद्याम् ।
कपालखट्वाङ्गधरां नृमुण्डमालाविभूषां मृगचर्मशोभाम्।। २

सुशुष्कमांसां च शवासनसथां विभीषणान् भीषयती सुरारीन् ।
रक्तप्रियामासमदावघूर्णो कालींशरण्यां शरणंव्रजामि ।। ३

सुघोरबीजं च कपीश्वरस्य चिन्तामणिं कुब्जितकामरूपे।
विधाय विद्यासु च कामराजं कामंकलामालिनि कामराजम् ।। ४

वह्नेर्वधूमन्त्रवरोऽयमीशो विश्वं पुनातीश्वरि देविवन्दे।
मन्त्रेण चानेन च सिद्धयश्च सुसिद्धयस्ताश्च जगन्निवासे।। ५

पञ्चारयुग्मञ्च त्रिकोणयुग्मं पुनश्चपञ्चारयुगेकनद्धम् ।
कलाष्टकोणाङ्कितभूगृहंच मन्त्रेश्वरित्त्वत्पदपङ्कजस्थम्।। ६

संपूज्य यन्त्रं तव विश्वनायिके निष्पापिनस्ते सहसाभवन्ति ।
ये साधकास्त्वच्छरणानुसारिणः कुलानुवृत्या परमाः पवित्राः ।। ७

ते सिद्धिमृद्धिं च यशोऽनुगम्यां वृणीत नुत्या प्रभवन्तिभूपाः।
समस्त मन्त्रेण विधायचाङ्गन्यासादिकं भक्तिसुभावयुक्ताः।। ८

ते किङ्करीकृत्य सुरारिदेवान्नियोजयन्त्येक विभूतियुक्ते।
वदामिनान्यं नश्रृणोमिचान्यं न गृणामिचान्यं न च चिन्तयामि ।। ९

स्मरामिनान्यं न भजामिचान्यं ध्यायामिचान्यं न वितर्कयामि ।
ते पादपद्मं हृदयाब्जवासं त्वां विश्वयोनिं शरणंप्रपद्ये।। १०

येषां न दैवं त्वमिहासिदेवि नाराधयन्तीह नराः कुबुद्धयः।
अन्धन्तमश्च प्रविशन्ति ते वै न दर्शनं चास्ति दुरात्मनां ते ।। ११

ऋषिरुवाच ।।

इतिवाक्यंसमाकर्ण्य परमामृतसम्मितम् ।
प्रसन्नाभून्महाकाली व्रियतामीप्सितोवरः ।। १२

इत्युवा च विशालाक्षी शम्भोरानन्दकारिणी।
प्रसन्नापरमाह्लादसंयुताशिवभाषणात् ।। १३

व्रियतां च मनोऽभीष्टो वरो जगतिदुर्लभः ।
दास्यामितवदातव्यमितिस्तुत्या वशीकृता ।। १४

श्रीशिव उवाच ।।

नकुलाचारतो देवि मतिर्मेऽस्तुकदाचन ।
शिथिला देवदेवेशि सूक्तं च सफलंभवेत् ।। १५

श्रीदेव्युवाच ।।

एवमस्त्विति चोक्ताहि तिस्रोदेव्यः सनातनाः ।
अन्तर्द्धिमापुः ररमा एकास्मिन्नास्थिताऽभवत् ।। १६

अथतान्सासुरानम्वा प्रोवाचवचनंमुदा ।
सन्तोषयन्ती चमुहुर्भक्तानुग्रहतत्परा ।। १७

देव्युवाच ।।

श्रृणुध्वं प्रीतिसंयुक्ता ब्रह्मविष्णुमहेश्वराः ।
देवीसूक्तं परं ध्यातं भविष्यति वरप्रदम् ।। १८

देवीसूक्तं विनादेवा ये च सप्तशतीं नराः ।
श्रोष्यन्ति च पठिष्यन्ति तेषां पापं पदेपदे ।। १९

देवीसूक्तं विनापाठो ह्यरण्ये रोदनं यथा ।
स्तोत्रत्रयेण चान्येन पूर्णंस्तोत्रमभूदिदम् ।। २०

देवा ऊचुः

मात:सप्तशतीस्तोत्रफलस्तुतितिरियोच्यताम् ।
यांसमाकर्ण्यदेवानां विश्वासोजायतेभृशम् ।। २१

ऋषिरुवाच

इतिवाक्यंसमाकर्ण्य ब्रह्मबिष्णुशिवोदितम् ।
फलस्तुतिमथोवाच स्तोत्रस्यास्य महामते ।। २२

इति श्रीषट्तन्त्रे सप्तशत्यङ्गकालीसूक्तं सम्पूर्णम्

# दलस्तोत्रम्

अथ दलम्

ओं नमो भगवति जय जय चामुण्डे चण्डि चण्डेश्वरि, चण्डायुधे, चण्डरूपधारिणी, ताण्डवप्रिये, कुण्डलीभूत–दिङ्नाग–मण्डलीभूत–गण्डस्थले, समस्त–जगदण्ड–संहारकारिणि, परे,अनन्तानन्दरूपे, शिवे, नरशिरोमालालंकृत वक्षःस्थले, मणि–मकुट–चूडाबद्धार्धचन्द्र–खंडे, महाभीषणे, देवि, परमेश्वरि, महामाये, षोडशकला–परिवृतोल्लासिते, महादेवासुर–समर–निहत–रुधिरार्द्री–कृतालंबित–तनु–कमलोद्भासिताकाशे, संपूर्णरुधिर–शोभित महाकपालवक्त्र–हासिनि,

दृढतर–निबद्ध्यमान–रोमराजी–सहित–हेम–काञ्ची–दामोज्ज्वलित–वसनारुणी, भूत–नूपुर प्रज्ज्वलित–महीमण्डले, महाशंभुरूपे, महाव्याघ्र–चर्मांबरधरे, महासर्प–यज्ञोपवीतिनि, महाश्मशान–भस्मोद्धूलित सर्वांङ्गार्द्रे, कालिकालि, महाकालि, कालाग्नि–रुद्रकालि, कालसङ्कर्षिणि, कालनाशिनि, कालरात्रिसञ्चारिणि, नभोभक्षिणि, नाना–भूत–प्रेत–पिशाचगण–सहस्र सञ्चारिणि, नानाव्याधि–प्रशमनि, सर्वदुःखशमनि, सर्वदारिद्र्यनाशिनि धगधगेत्यास्वादित–मांसखण्डे, गात्रविक्षेप कलकलायमान कङ्कालधारिणि, मधुमांस–रुधिरावसिक्त–विलासिनि, सकल–सुरासुर–गन्धर्व–यक्ष–विद्याधर–किन्नर किंपुरुषादिभिः–स्तूयमानचरिते,

सर्वमन्त्राधिकारिणि, सर्वशक्तिप्रधाने, सकललोकपावनि, सकललोक भयप्रक्षालिनि,सकल लोकैकजननि, ब्रह्माणी–माहेश्वरी–कौमारी वैष्णवी–शंखिनी–वाराहीन्द्राणी –चामुण्डा–महालक्ष्मी रूपे, महाविद्ये, योगेश्वरी,योगिनि, चण्डिके, महायोगिनि, माये, विश्वेशरूपिणि, सर्वाभरणभूषिते, अतल–वितल–सुतल–रसातल–तलातल–महातल–पाताल भूर्भुवः–सुवर्महर्जनस्तपस्सत्याख्य चतुर्दशभुवनैकनाथे, महाक्रूरे, प्रसन्न रूपधारिणि, ओं नमो पितामहाय, ओं नमो नारायणाय, ओं नमः शिवायेति सकललोक– जप्यमान–ब्रह्मविष्णु महेश्वररूपिणि, दण्ड–कमण्डलु–कुण्डलधारिणि, सावित्रि सर्वमंगलप्रदे, सरस्वति, पद्मालये, पार्वति, सकलजगत्स्वरूपिणि, शंख–चक्र–गदापद्मधारिणि,

परशु–शूल–पिनाक–टंकधारिणि, शर–चाप–शूलकरवाल खड्ग
डमरुकांकुश गदा परशु–तोमर–डिण्डिपाल भुशुण्डीमुद्गर मुसल–
परिघायुध–दोर्द्दण्ड–सहस्रे, चन्द्रार्क–वह्निनयने, सुन्दरि, इन्द्राग्नि–
यम–निर्ऋति–वरुण–वायु–सोमेशान प्रधानशक्ति–हेतुभूते, सप्तद्वीप–
समुद्रोपरि महाव्याप्तेश्वरि, महासचराचर प्रपञ्च–मालालंकृत–
मेदिनीनाथे, महाप्रभावे, महाकैलासपर्वतोद्यान वनविहारिणि,
नदीतीर्थ–देवतायतनालंकृते, वसिष्ठ–वामदेवादि–महामुनिगण–
वन्द्यमान चरणारविन्दे, द्विचत्वारिंशद्–वर्णमाहात्म्ये, पर्याप्त–वेद–
वेदाङ्गाद्यनेक–शास्त्राद्याधारभूते, शब्दब्रह्ममयि, लिपिदेवि, मातृकादेवि,
चिरं मां रक्ष रक्ष, मम शत्रून्–हुङ्कारेण नाशय नाशय, भूत–प्रेत–

पिशाचादीन् उच्चाटयोच्चाटय समस्त–ग्रहान्–वशीकुरु–वशीकुरु, मोहय मोहय, स्तंभय स्तंभय, मोदय मोदय, उन्मादयोन्मादय, विध्वंसय विध्वंसय, द्रावय द्रावय, श्रावय श्रावय, स्तोभय स्तोभय, संक्रामय संक्रामय, सकलारातीन् मूर्धनि स्फोटय स्फोटय, मम शत्रून् शीघ्रं मारय मारय, जाग्रत् स्वप्न–सुषुप्त्यवस्थासु अस्मान् राजचोराग्नि–जलवात–विषभूत–शत्रुमृत्यु– ज्वरादि– नानारोगेभ्यो नानाभिचारेभ्यो नानापवादेभ्यः परकर्म मन्त्र–तन्त्र यन्त्रौषध शल्यशून्यक्षुद्रेभ्यः सम्यङ्–मां रक्ष रक्ष, ओं श्रीं ह्लीं क्ष्मौं मम सर्वशत्रु प्राणसंहारकारिणि हुं फट् स्वाहा ।।

।। इति दलस्तोत्रम् ।।

# हृदयस्तोत्रम्

अथ हृदयम्

अस्य श्री चण्डिका–हृदयस्तोत्र–महामन्त्रस्य, मार्कण्डेय ऋषिः,
अनुष्टुप् छन्दः, श्री चण्डिका देवता, ह्रां बीजं, ह्रीं शक्तिः ह्रूं कीलकं,
श्री चण्डिकाप्रसादसिद्ध्यर्थे जपे विनियोगः। ह्रां इत्यादि षडंग–न्यासः

## ध्यानम्

सर्व–मंगल–मांगल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यंबके गौरि नारायणि नमोऽस्तु ते ।।

ब्रह्मोवाच–

अथातस्संप्रवक्ष्यामि विस्तरेण यथातथम् ।
चण्डिकाहृदयं गुह्यं शृणुष्वैकाग्रमानसः ।।

ओं ऐं ह्रीं क्लीं, ह्रां, ह्रीं, ह्रूं, जय जय चामुण्डे, चण्डिके, त्रिदश–मणि–मकुट–कोटीर संघट्टित–चरणारविन्दे, गायत्रि, सावित्रि, सरस्वति, महाहिकृताभरणे, भैरवरूपधारिणि, प्रकटित–दंष्ट्रोग्रवदने, घोरे, घोरानने, ज्वलज्वल–ज्वाला–सहस्रपरिवृते, महाट्टहास–बधिरीकृत–दिगन्तरे, सर्वायुधपरिपूर्णे, कपालहस्ते, गजाजिनोत्तरीये, भूतवेतालबृन्दपरिवृते, प्रकम्पितधराधरे, मधुकैटभ–महिषासुर धूम्रलोचन–चण्ड–मुण्ड–

रक्तबीज–शुंभ–निशुंभादि–दैत्य–निष्कण्टके, कालरात्रि, महामाये, शिवे, नित्ये, इन्द्राग्नि–यम–निर्ऋति वरुण–वायु–सोमेशानप्रधान–शक्तिभूते, ब्रह्माविष्णु शिवस्तुते, त्रिभुवनाधाराधारे, वामे, ज्येष्ठे, रौद्रंबिके ब्राह्मी–माहेश्वरी–कौमारी–वैष्णवी–शंखिनी वाराहीन्द्राणी–चामुण्डा–शिवदूती–महाकाली–महालक्ष्मी महासरस्वतीति– स्थिते, नादमध्यस्थिते, महोग्र–विषोरग–फणामणि–घटित–मकुट–कटकादिरत्न महाज्वालामये, पाद–बाहु–दण्डोत्तमांगे, महामहिषोपरि–गन्धर्वविद्याधराराधिते, नवरत्ननिधिकोशे, तत्त्वस्वरूपे, वाक्–पाणि–पाद–पायूपस्थात्मिके,शब्द–स्पर्श–रूप–रस–गन्धादिस्वरूपे,

त्वक्चक्षुः श्रोत्र–जिह्वा–घ्राण–महाबुद्धिस्थिते, ओं ऐंकार–ह्रींकार–क्लींकार–हस्ते, आं क्रों आग्नेय–नयन–पात्रे प्रवेशय प्रवेशय, द्रां शोषय शोषय, द्रीं सुकुमारय सुकुमारय, श्रीं सर्वं प्रवेशय प्रवेशय, त्रैलोक्य–वरवर्णिनि समस्तचित्तं वशीकुरु वशीकुरु, मम शत्रून् शीघ्रं मारय मारय, जाग्रत्–स्वप्न–सुषुप्त्यवस्थासु अस्मान् राज–चोराग्नि–जल–वात विषभूत–शत्रुमृत्यु–ज्वरादि–स्फोटकादि नानारोगेभ्यो नानाभिचारेभ्यो नानापवादेभ्यः परकर्म –मन्त्र– तन्त्र यन्त्रौषध– शल्य –शून्य– क्षुद्रेभ्यः सम्यङ् मां रक्ष रक्ष, ओं ऐं ह्रां ह्रीं ह्रूं ह्रैं ह्रः, स्फ्रां स्फ्रीं स्फ्रूं स्फ्रैं स्फ्रौं स्फ्रः–मम सर्वकार्याणि साधय साधय, हुं फट् स्वाहा ।

राजद्वारे श्मशाने वा विवादे शत्रुसङ्कटे ।
भूताग्नि–चोर–मध्यस्थे मयि कार्याणि साधय स्वाहा ।।

चण्डिकाहृदयं गुह्यं त्रिसन्ध्यं यः पठेन्नरः ।
सर्वकामप्रदं पुंसां भुक्ति–मुक्तिं प्रयच्छति ।।

।। इति हृदयस्तोत्रम् ।।

# गुरुकीलकम्

अथ गुरुकीलकम्

पुरा सनत्कुमाराय दत्तमेतन्मयानघ ।
संवर्ताय ददौ तच्च स चान्यस्मै ददौ च तत् ।। १

सर्वत्र चण्डीपाठस्य प्राचुर्येण महीतले ।
ब्रह्मकाण्डः कर्मकाण्डस्तन्त्रकाण्डश्च सर्वथा ।।
अभूत्प्रतिहतोऽनेन शीघ्रसिद्धिप्रदायिना ।। २

तदा तेषां च सार्थक्यं कर्तुकामेन भूतले ।
दानप्रतिग्रहाख्येन मन्त्रोऽयं कीलितो मया ।। ३

दानप्रतिग्रहाख्यं यत्कीलकं समुदाहृतम् ।
तदारभ्य च मन्त्रोऽयं कीलकेनाभिकीलितः ।
न सर्वेषां भवेत्सिद्ध्यै ये कीलकपराङ्मुखाः ।। ४

ये नराः कीलकेनेमं जपन्ति परया मुदा ।

तेषां देवी प्रसन्ना स्यात्ततः सर्वाः समृद्धयः ।। ५

त्वत्प्रसूतस्त्वदाज्ञप्तस्त्वद्दासस्त्वत्परायणः ।
त्वन्नामचिन्तनपरस्त्वदर्थेऽहं नियोजितः ।। ७

मयार्जितमिदं सर्वं तव स्वं परमेश्वरि ।
राष्ट्रं बलं कोशगृहं सैन्यमन्यच्च साधनम् ।। ८

त्वदधीनं करिष्यामि यत्नार्थे त्वं नियोक्ष्यसि ।
तत्र देवि सदा वर्ते तवाज्ञामेव पालयन् ।। ९

इति संचिन्त्य मनसा स्वार्जितानि धनानि च ।
कृष्णायां वा चतुर्दश्यायमष्टम्यां वा समाहितः ।। १०

समर्पयेन्महादेव्यै स्वार्जितं सकलं धनम् ।
राष्ट्रं बलं कोशगृहं नवं यद्यदुपार्जितम् ।। ११

अस्मिन्मासि मया देवि तुभ्यमेतत्समर्पितम् ।। १२

इति ध्यात्वा ततो देव्या प्रसादात्प्रतिगृह्य च ।
विभज्य पञ्चधा सर्वं त्र्यंशान्स्वाथ प्रकल्पयेत् ।। १३

देवपित्रतिथीनां च क्रियार्थे त्वेकमादिशेत् ।
एकांशं गुरवे दद्यात्तेन देवी प्रसीदति ।। १४

तस्य राज्यं बलं सैन्यं कोशः साधु विवर्धते ।
नानारत्नाकरः श्रीमान् यथा पर्वणि वारिधिः ।। १५

ज्ञात्वा नवाक्षरं मन्त्रं जीवब्रह्मसमाश्रयम् ।
तत्त्वमस्यादिवाक्यानां सारं संसारभेषजम् ।। १६

सप्तशत्याख्यमन्त्रस्य यावज्जीवमहं जपम् ।
कुर्वन् ततो न प्रमादं प्राप्नुयामिति निश्चयम् ।। १७

कृत्वा प्रारभ्य कुर्वीत ह्यकुर्वाणो विनश्यति ।
नाहं ब्रह्म निराकुर्यो मा मा ब्रह्म निराकरोत् ।। १८

अनिराकरणं मेऽस्तु अनिराकरणं मम ।
इति वेदान्तमूर्धन्ये छान्दोग्येऽस्य प्रपञ्चनात् ।। २९

प्रारभ्य तत्परित्यागो न तस्य श्रेयसे मतः ।
नाब्रह्मवित्कुले तस्य जायते हि कदाचन ।। २०

न दारिद्र्यं कुले तस्य यावत्स्थास्यति मेदिनी ।
प्रतिसंवत्सरं कुर्याच्छारदं वार्षिकं तथा ।। २१

तेन सर्वमवाप्नोति सुरासुरसुदुर्लभम् ।
सत्यं सत्यमिदं सत्यं गोपनीयं प्रयत्नतः ।। २२

पुत्राय ब्रह्मनिष्ठाय पित्रा देयं महात्मना ।
अन्यथा देवता तस्मै शापं दद्यान्न संशयः ।। २३

इति गुरुकीलकम् ।।

# देव्यपराध-क्षमापन स्तोत्रम्

न मन्त्रं नो यन्त्रं तदपि च न जाने स्तुतिमहो
न चाह्वानं ध्यानं तदपि च न जाने स्तुतिकथाः ।
न जाने मुद्रास्ते तदपि च न जाने विलपनं
परं जाने मातस्त्वदनुसरणं क्लेशहरणम् ।। १

विधेरज्ञानेन द्रविण–विरहेणालसतया
विधेयाशक्यत्वात्तव चरणयोर्याच्युतिरभूत् ।
तदेतत् क्षन्तव्यं जननि सकलोद्धारिणि शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ।। २

पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः
परं तेषां मध्ये विरल–तरलोऽहं तव सुतः।
मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ।। ३

जगन्मातर्मातस्तव चरणसेवा न रचिता
न वा दत्तं देवि द्रविणमपि भूयस्तव मया ।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ।। ४

परित्यक्ता देवा विविध–विध–सेवाकुलतया
मया पञ्चाशीतेरधिकमपनीते तु वयसि ।

इदानीं चेन्मातस्तव यदि कृपा  नापि भविता
निरालम्बो लम्बोदर–जननि कं यामि शरणम् ।। ५

श्वपाको जल्पाको भवति मधुपाकोपमगिरा
निरातङ्कोरङ्को विहरति चिरं कोटि–कनकैः ।
तवापर्णे कर्णे विशति मनुवर्णे फलमिदं
जनः को जानीते जननि जपनीयं जपविधौ ।। ६

चिताभस्मालेपो गरलमशनं दिक्पटधरो
जटाधारी कण्ठे भुजगपतिहारी पशुपतिः ।
कपाली भूतेशो भजति जगदीशैकपदवीं
भवानि त्वत्पाणिग्रहण–परिपाटी–फलमिदम् ।। ७

न मोक्षस्याकाङ्क्षा भव–विभव–वाञ्छापि च न मे
न विज्ञानापेक्षा शशिमुखि सुखेच्छापि न पुनः ।
अतस्त्वां संयाचे जननि जननं यातु मम वै
मृडानी रुद्राणी शिव शिव भवानीति जपतः ।। ८

नाराधितासि विधिना विविधोपचारैः
किं रूक्ष–चिन्तनपरैर्न कृतं वचोभिः ।
श्यामे त्वमेव यदि किञ्चन मय्यनाथे
धत्से कृपामुचितमम्ब परं तवैव ।। ९

आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवेशि ।
नैतच्छठत्वं मम भावयेथाः क्षुधातृषार्ता जननीं स्मरन्ति ।। १०

जगदम्ब विचित्रमत्र किं परिपूर्णा करुणास्ति चेन्मयि ।
अपराध–परम्परापरं न हि माता समुपेक्षते सुतम् ।। ११

मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि ।।
एवं ज्ञात्वा महादेवि यथायोग्यं तथा कुरु ।। १२

।। इति देव्यपराधक्षमापनस्तोत्रं सम्पूर्णम् ।।

# दुर्गासप्तश्लोकी

शिव उवाच-

देवि त्वं भक्तसुलभे सर्वकार्यविधायिनी।
कलौ हि कार्य-सिद्ध्यर्थमुपायं ब्रूहि यत्नतः।।

देव्युवाच-

शृणु देव प्रवक्ष्यामि कलौ सर्वेष्टसाधनम्।
मया तवैव स्नेहेनाप्यम्बास्तुतिः प्रकाश्यते।।

अस्य श्री दुर्गासप्तश्लोकी-माला-महामन्त्रस्य। नारायणऋषिः।
अनुष्टुबादीनि छन्दांसि। श्रीदुर्गा-लक्ष्मी-सरस्वति देवता।।

ऐं बीजं, क्लीं शक्तिः, ह्रीं कीलकम् ।।

श्री दुर्गा-लक्ष्मी-सरस्वती-प्रीत्यर्थे जपे विनियोगः ।।

जपः।। (त्रिवारम्)

ज्ञानिनामपि चेतांसि देवी भगवती हि सा।
बलादाकृष्य मोहाय महामाया प्रयच्छति।। १

दुर्गे स्मृता हरसि भीतिं अशेषजन्तोः
स्वस्थैः स्मृता मतिं अतीव शुभां ददासि।
दारिद्र्य-दुःख-भयहारिणि का त्वदन्या
सर्वोपकार करणाय सदार्द्र-चित्ता।। २

सर्वमंगल-मांगल्ये शिवे-सर्वार्थ-साधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते।। ३

शरणागत-दीनार्त-परित्राण-परायणे।
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते।। ४

सर्वस्वरूपे सर्वेशे सर्वशक्ति-समन्विते।
भयेभ्यस्त्राहि नो देवि दुर्गे देवी नमोऽस्तु ते।। ५

रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान् सकलानभीष्टान्।।
त्वामाश्रितानां न विपन्नराणां त्वामाश्रिता ह्याश्रयतां प्रयान्ति।। ६

सर्वा-बाधा-प्रशमनं त्रैलोक्यस्याखिलेश्वरि।
एवमेव त्वया कार्यमस्मद्वैरि-विनाशनम्।। ७

इति श्री दुर्गासप्तश्लोकी

# आपदुन्मूलन श्री दुर्गास्तोत्रम्

लक्ष्मीशे योगनिद्रां प्रभजति भुजगाधीश–तल्पे सदर्पा–
वुत्पन्नौ दानवौ तच्छ्रवणमलमयां–यौ मधुं कैटभं च ।
दृष्ट्वा भीतस्य धातुः स्तुतिभिरभिनुतां आशु तौ नाशयन्तीं
दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ।। १

युद्धे निर्जित्य दैत्यस्त्रिभुवनमखिलं यस्तदीयेषु धिष्ण्येष्वास्थाय
स्वान् विधेयान् स्वयमगमदसौ शक्रतां विक्रमेण ।
तं सामात्याप्तमित्रं महिषमपिनिहत्यास्य मूर्धानिरूढां
दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ॥ २

विश्वोत्पत्ति–प्रणाश–स्थिति–विहृतिपरे देवि घोरामरारि–
त्रासात् त्रातुं कुलं नः पुनरपि च महासङ्कटेष्वीदृशेषु ।
आविर्भूयाः पुरस्तादिति चरणनमत्–सर्वगीर्वाणवर्गां
दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ॥ ३

हन्तुं शुंभं निशुंभं विबुधगणनुतां हेमडोलां हिमाद्रौ
आरूढां व्यूढदर्पान् युधि निहतवतीं धूम्रदृक् चण्डमुण्डान्।
चामुण्डाख्यां दधानां उपशमितमहारक्तबीजोपसर्गं
दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ।। ४

ब्रह्मेश–स्कन्द–नारायण–किटि–नरसिंहेन्द्रशक्तीः स्वभृत्याः
कृत्वा हत्वा निशुंभं जित–विबुधगणं त्रासिताशेषलोकम् ।
एकीभूयाथ शुंभं रणशिरसि निहत्यास्थितां आत्तखड्गां
दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ।। ५

उत्पन्ना नन्दजेति  स्वयमवनितले शुंभमन्यं निशुंभं
भ्रामर्याख्याऽरुणाख्यं पुनरपि जननी दुर्गमाख्यं निहन्तुं ।
भीमा शाकंभरीति त्रुटित–रिपुभटां रक्तदन्तेति जातां
दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ।।  ६

त्रैगुण्यानां गुणानां अनुसरणकला–केलि–नानावतारैः
त्रैलोक्य–त्राण–शीलां दनुजकुलवनी–वह्निलीलां सलीलां ।
देवीं सच्चिन्मयीं तां वितरितविनमत्–सत्रिवर्गापवर्गां
दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ।।  ७

सिंहारूढां त्रिनेत्रां करतलविलसच्छंखचक्रासिरम्यां
भक्ताभीष्टप्रदात्रीं रिपुमथनकरीं सर्वलोकैकवन्द्यां ।
सर्वालङ्कारयुक्तां शशियुतमकुटां श्यामलांगीं कृशांगीं
दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ।। ८

त्रायस्व स्वामिनीति त्रिभुवनजननि प्रार्थना त्वय्यपार्था
पाल्यन्तेऽभ्यर्थनायां भगवति शिशवः किन्त्वनन्या जनन्याः।
तत्तुभ्यं स्यान्नमस्येत्यवनतविबुधाह्लादिवीक्षाविसर्गां
दुर्गां देवीं प्रपद्ये शरणमहमशेषापदुन्मूलनाय ।। ९

एतं सन्तः पठन्तु स्तवमखिलविपज्जालतूलानलाभं
हृन्मोह–ध्वान्त–भानु–प्रथिममखिल–सङ्कल्प–कल्प–द्रुकल्पम्।
दौर्गं दौर्गत्य–घोरातप–तुहिनकर–प्रख्यं अंहोगजेन्द्र
श्रेणी–पञ्चास्यदेश्यं विपुलभयद–कालाहि–तार्क्ष्यप्रभावम् ।। १०

।। इति आपदुन्मूलन श्री दुर्गास्तोत्रं संपूर्णम् ।।

श्री अप्पय्यदीक्षितेन्द्र विरचित

# ॥ दुर्गाचन्द्रकलास्तुतिः ॥

वेधोहरीश्वरस्तुत्यां विहर्त्रीं विन्ध्यभूधरे ।
हरप्राणेश्वरीं वन्दे हन्त्रीं विबुधविद्विषाम् ॥ १

अभ्यर्थनेन सरसीरुहसंभवस्य त्यक्त्वोदिता भगवदक्षिपिधानलीलाम् ।
विश्वेश्वरी विपदपागमने पुरस्तान् माता ममास्तु मधुकैटभयोर्निहन्त्री ॥ २

प्राङ्निर्जरेषु निहितैर्निजशक्तिलेशैः एकीभवद्भिरुदिताखिललोकगुप्त्यै ।
संपन्नशस्त्रनिकरा च तदायुधस्थैः माता ममास्तु महिषान्तकरी पुरस्तात् ॥ ३

प्रालेयशैलतनया तनुकान्तिसम्पत् कोशोदिता कुवलयच्छविचारुदेहा ।
नारायणी नमदभीप्सितकल्पवल्ली सुप्रीतिमावहतु शुम्भनिशुम्भहन्त्री ।।४

विश्वेश्वरीति महिषान्तकरीति यस्याः नारायणीत्यपि च नामभिरङ्कितानि ।
सूक्तानि पङ्कजभुवाच सुरर्षिभिश्च दृष्टानि पावकमुखैश्च शिवां भजे ताम्।।५

उत्पत्तिदैत्यहननस्तवनात्मकानि संरक्षकाण्यखिलभूतहिताय यस्याः ।
सूक्तान्यशेषनिगमान्तविदः पठन्ति तां विश्वमातरमजस्रमभिष्टवीमि ।। ६

ये वैप्रचित्तपुनरुत्थितशुम्भमुख्यैः दुर्भिक्षघोरसमयेन च कारितासु ।
आविष्कृतास्त्रिजगदार्तिषु रूपभेदाः
तैरम्बिका समभिरक्षतु मां विपद्भ्यः ।। ७

सूक्तं यदीयमरविन्दभवादिदृष्ट मावर्त्य देव्यनुपदं सुरथस्समाधिः ।
द्वावप्यवापतुरभीष्टमनन्यलभ्यं तामादिदेवतरुणीं प्रणमामि देवीम् ।। ८

माहिष्मतीतनुभवं च रुरुं च हन्तुं आविष्कृतैर्निजरसादवतारभेदैः ।
अष्टादशाहतनवाहतकोटिसंख्यैः
अम्बा सदा समभिरक्षतु मां विपद्भ्यः ।। ९

एतच्चरित्रमखिलं लिखितं हि यस्याः संपूजितं सदन एव निवेशितं वा ।
दुर्गं च तारयति दुस्तरमप्यशेषं श्रेयः प्रयच्छति च सर्वमुमां भजे ताम् ।।१०

यत्पूजनस्तुतिनमस्कृतिभिर्भवन्ति प्रीताः पितामह रमेश हरास्त्रयोऽपि ।
तेषामपि स्वकगुणैर्ददतीं वपूंषि तामीश्वरस्य तरुणीं शरणं प्रपद्ये ।। ११

कान्तारमध्यदृढलग्नतयाऽवसन्ना मग्नाश्च वारिधिजले रिपुभिश्च रुद्धाः ।
यस्याः प्रपद्य चरणौ विपदस्तरन्ति सा मे
सदाऽस्तु हृदि सर्वजगत्सवित्री ।। १२

बन्धे वधे महति मृत्युभये प्रसक्ते वित्तक्षये च विविधे च महोपतापे ।
यत्पादपूजनमिह प्रतिकारमाहुः सा मे समस्तजननी शरणं भवानी ।। १३

बाणासुरप्रहितपन्नगबन्धमोक्षः तद्बाहुदर्पदलनादुषया च योगः ।
प्राद्युम्निना द्रुतमलभ्यत यत्प्रसादात् सा मे शिवा
सकलमप्यशुभं क्षिणोतु ।। १४

पापः पुलस्त्यतनयः पुनरुत्थितो माम् अद्यापि हर्तुमयमागत इत्युदीतम् ।
यत्सेवनेन भयमिन्दिरयाऽवधूतं तामादिदेवतरुणीं शरणं गतोऽस्मि ।। १५

यद्ध्यानजं सुखमवाप्यमनन्तपुण्यैः साक्षात्तमच्युतपरिग्रहमाश्ववापुः ।
गोपाङ्गनाः किल यदर्चनपुण्यमात्रात्
सा मे सदा भगवती भवतु प्रसन्ना ॥ १६

रात्रिं प्रपद्य इति मन्त्रविदः प्रपन्नान् उद्बोध्य मृत्यवधिमन्यफलैः प्रलोभ्य ।
बुध्वा च तद्विमुखतां प्रतनं नयन्तीम्
आकाशमादिजननीं जगतां भजे ताम् ॥ १७

देशकालेषु दुष्टेषु दुर्गाचन्द्रकलास्तुतिः ।
सन्ध्ययोरनुसन्धेया सर्वापद्विनिवृत्तये ॥ १८

इति अप्पय्यदीक्षितेन्द्र विरचित दुर्गाचन्द्रकलास्तुतिः

# सिद्धि सम्पुट-मन्त्राः

**1. For General welfare of the Society**

देव्या यया ततमिदं जगदात्मशक्त्या निश्शेषदेवगणशक्ति समूहमूर्त्या ।
ताममम्बिकामखिल–देवमहर्षिपूज्यां
भक्त्या नताः स्म विदधातु शुभानि सा नः ।। १

**2. For the protection from the Calamities facing the world**

यस्याः प्रभावमतुलं भगवाननन्तो ब्रह्मा हरश्च न हि वक्तुमलं बलं च ।
सा चण्डिकाखिलजगत्परिपालनाय
नाशाय चाशुभभयस्य मतिं करोतु ।। २

### 3. For the protection of the world

या श्रीः स्वयं सुकृतिनां भवनेष्वलक्ष्मीः
पापात्मनां कृतधियां हृदयेषु बुद्धिः ।
श्रद्धा सतां कुलजनप्रभवस्य लज्जा
तां त्वां नताः स्म परिपालय देवि विश्वम् ॥ ३

### 4. For the progress of the world

विश्वेश्वरि त्वं परिपासि विश्वं विश्वात्मिका धारयसीति विश्वम् ।
विश्वेशवन्द्या भवती भवन्ति विश्वाश्रया ये त्वयि भक्ति नम्राः ॥ ४

### 5. For removal of dangers

देवि प्रपन्नार्तिहरे प्रसीद प्रसीद मातर्जगतोऽखिलस्य ।
प्रसीद विश्वेश्वरि पाहि विश्वं त्वमीश्वरी देवि चराचरस्य ॥ ५

### 6. For the destruction of sins committed by the World

देवि प्रसीद परिपालय नोऽरिभीतेः नित्यं यथासुरवधादधुनैव सद्यः।
पापानि सर्वजगतां प्रशमं नयाशु
उत्पात–पाक–जनितांश्च महोपसर्गान् ।। ६

### 7. For removal of dangers

शरणागतदीनार्त–परित्राण–परायणे
सर्वस्यार्तिहरे देवि नारायणि नमोऽस्तु ते ।। ७

### 8. For removal of impediments and for attaining welfare

स्तुता सुरैःपूर्वमभीष्टसंश्रयात्तथा सुरेन्द्रेण दिनेषु सेविता।
करोतु सा नः शुभहेतुरीश्वरी शुभानि भद्राण्यभिहन्तु चापदः ।। ८

### 9. For destruction of fear

क. सर्वस्वरूपे सर्वेशे सर्वशक्तिसमन्विते ।
भयेभ्यस्त्राहि नो देवि दुर्गे देवि नमोऽस्तु ते ।।

ख. एतत्ते वदनं सौम्यं लोचनत्रयभूषितम् ।
पातु नः सर्वभीतिभ्यः कात्यायनि नमोऽस्तु ते ।।

ग. ज्वालाकरालमत्युग्रमशेषासुरसूदनम् ।
त्रिशूलं पातु नो भीतेर्भद्रकालि नमोऽस्तु ते ।। ९

### 10. For destruction of sins

हिनस्ति दैत्यतेजांसि स्वनेनापूर्य या जगत् ।
सा घण्टा पातु नो देवि पापेभ्योऽनः सुतानिव ।। १०

### 11. For annihilation of diseases

रोगानशेषानपहंसि तुष्टा रुष्टा तु कामान् सकलानभीष्टान् ।
त्वामाश्रितानां न विपन्नराणां त्वमाश्रिता ह्याश्रयतां प्रयान्ति ।। ११

### 12. For curing small - pox

जयन्ती मङ्गला काली भद्रकाली कपालिनी ।
दुर्गा क्षमा शिवा धात्री स्वाहा स्वधा नमोऽस्तु ते ।। १२

### 13. For attaining good health

देहि सौभाग्यमारोग्यं देहि मे परमं सुखम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। १३

**14. For attaining good natured wife**

पत्नीं मनोरमां देहि मनोवृत्तानुसारिणीम् ।
तारिणीं दुर्गसंसार–सागरस्य कुलोद्भवाम् ॥ १४

**15. For destroying all impediments.**

सर्वाबाधाप्रशमनं त्रैलोक्यस्याखिलेश्वरि ।
एवमेव त्वया कार्यमस्मद्वैरिविनाशनम् ॥ १५

**16. For all-round progress**

ते सम्मता जनपदेषु धनानि तेषां
तेषां यशांसि न च सीदति धर्मवर्गः ।
धन्यास्त एव निभृतात्मज–भृत्यदारा
येषां सदाभ्युदयदा भवती प्रसन्ना ॥ १६

### 17. For destruction of poverty

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि।
दारिद्र्य दुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदाऽऽर्द्रचित्ता ।। १७

### 18. Prayer for protection

शूलेन पाहि नो देवि पाहि खड्गेन चाम्बिके।
घण्टास्वनेन नः पाहि चापज्यानिःस्वनेन च ।। १८

### 19. For attaining equanimity to see all women as mother or sister

विद्याः समस्तास्तव देवि भेदाः स्त्रियः समस्ताः सकला जगत्सु।
त्वयैकया पूरितमम्बयैतत् का ते स्तुतिः स्तव्यपरा परोक्तिः ।। १९

### 20. For attaining Success

सर्वमङ्गलमाङ्गल्ये शिवे सर्वार्थसाधिके।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥ २०

### 21. For Attaining Strength

सृष्टि–स्थिति–विनाशानां शक्तिभूते सनातनि।
गुणाश्रये गुणमये नारायणि नमोऽस्तु ते ॥ २१

### 22. For attaining happiness

प्रणतानां प्रसीद त्वं देवि विश्वार्तिहारिणि।
त्रैलोक्यवासिनामीड्ये लोकानां वरदा भव ॥ २२

### 23. For safeguarding against all evils

रक्षांसि यत्रोग्रविषाश्च नागा यत्रारयो दस्यु–बलानि यत्र ।
दावानलो यत्र तथाब्धिमध्ये तत्र स्थिता त्वं परिपासि विश्वम् ।। २३

### 24. To be redeemed of all impediments and for attaining wealth and good children

सर्वाबाधाविनिर्मुक्तो धनधान्यसुतान्वितः ।
मनुष्यो मत्प्रसादेन भविष्यति न संशयः ।। २४

### 25. For attaining Devotion and Salvation

विधेहि देवि कल्याणं विधेहि परमां श्रियम् ।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। २५

### 26. For Deliverance from sins and attaining Salvation

नतेभ्यः सर्वदा भक्त्या चण्डिके दुरितापहे।
रूपं देहि जयं देहि यशो देहि द्विषो जहि ।। २६

### 27-29. For attaining Heaven & Liberation

सर्वभूता यदा देवी स्वर्गमुक्तिप्रदायिनी।
त्वं स्तुता स्तुतये का वा भवन्तु परमोक्तयः ।। २७

सर्वस्य बुद्धिरूपेण जनस्य हृदि संस्थिते।
स्वर्गापवर्गदे देवि नारायणि नमोऽस्तु ते ।। २८

त्वं वैष्णवी शक्तिरनन्तवीर्या विश्वस्य बीजं परमासि माया।
सम्मोहितं देवि समस्तमेतत् त्वं वै प्रसन्ना भुवि मुक्तिहेतुः ।। २९

30. For knowing the future in dreams.

दुर्गे देवि नमस्तुभ्यं सर्वकामार्थसाधिके।
मम सिद्धिमसिद्धिं वा स्वप्ने सर्वं प्रदर्शय।। ३०

# अथ श्रीगौडपादकृत-कारिकावली

मार्कण्डेय उवाचेति प्रथमो मंत्र ईरितः।।
ततो मंत्राः सप्तदशाप्यर्धश्लोकात्मकस्ततः।। १

वैश्योक्तेरग्रतोऽर्धंस्यात्ततो मंत्रास्त्रयः स्मृताः।।
कथंत इत्यप्यर्धंस्याद्राजोवाचेतिमंत्रकः।। २

तत श्चार्धद्वयं मंत्रौ वैश्योक्तिस्तदनंतरम् ॥
ततोऽर्धमंत्रः संप्रोक्तस्त्रयःश्लोका मनुत्रयम् ॥ ३

करोमि किं यदर्धंस्यान्मार्कण्डेयवचस्ततः ॥
ततस्ताविदमर्धं स्यादेकःश्लोकात्मकोमनुः ॥ ४

उपविष्टावित्यर्धमंत्रो राजोवाचमनुस्तथा ॥
भगवन्नितिचार्धंस्याच्चतुःश्लोकी चतुष्टयम् ॥ ५

ममास्येत्यर्धमंत्रस्यान्मुनिवाक्यं ततःपरम् ॥
ज्ञानमस्तीत्यर्धमंत्रोदशमंत्रास्ततः परम् ॥ ६

संसारेत्यर्धमंत्रःस्याद्राजोवाचमनुस्ततः ।।
भगवन्केत्यर्धमंत्रो मनुःश्लोकात्मकस्ततः ।। ७

तत्सर्वमर्धमुनिवाक्नित्यैर्वेत्यर्धमंत्रकः ।।
षण्मंत्रास्तु ततःप्रोक्ता निद्रामित्यर्धमंत्रकः ।। ८

ब्रह्मोवाच ततोऽर्धःस्यात्त्रयोदश ततः परम् ।।
बोधश्चेत्यर्धमंत्रःस्यान्मुनिवाक्यं ततः परम् ।।। ९

एवंस्तुतेत्यर्धमंत्रः पंचमंत्रास्ततःपरम् ।।
उक्तवंतावर्धमनुर्भगवद्वाक्यमेवच ।। १०

भवेतामिदमर्धंस्यात्किमन्येनेति चार्धकम् ।।

मुनिवाक्यं पुनश्चार्धं ततःस्याच्छ्लोकमंत्रकः ।। ११

मुनिवाक्यं ततो मंत्रौ द्वौ प्रोक्तौ चरमौ परौ ।।

इत्येवं प्रथमेऽध्याये मंत्रसंख्या समीरिता ।। १२

इति प्रथमोऽध्यायः ।।

द्वितीये ऋषिवाक्यं स्यादष्टषष्ठ्यणवः स्मृताः ।।

तृतीये मुनिवाक्यं तु पंचत्रिंशत्तथाणवः ।। १३

देवीवाक्यं ततश्चैकःश्लोको मुनिवचस्तथा ।।

पंचश्लोकास्ततोमंत्रास्तृतीयेऽध्याय ईरितः ।। १४

चतुर्थे मुनिवाक्यं तु षड्विंशतिरथाणवः ।।
मुनिवाक्यं ततोमंत्रद्वयं देवीवचस्तथा ।। १५
अर्धश्लोकात्मकोमंत्रो देवाऊचुस्ततःपरम् ।।
भगवत्येत्यर्धमंत्रस्ततः श्लोकत्रयं स्मृतम् ।। १६
मुनिवाक्यं वेदमंत्राःस्यादध्यायेऽथपंचमे ।।
मुनिवाक्यं षट्श्लोका देवाऊचुस्ततःपरम् ।। १७
पंचश्लोकास्तु तेमंत्रा या देवौत्यादितःपुनः ।।
भ्रांतिदेव्यन्तिमा मंत्रा एकविंशतिरीरिता: ।। १८
तेषां खंडत्रयेणौव त्रिषष्ठ्याहुतयोऽभवन् ।।
विंशत्यक्षरपर्यंतं प्रथमः खंड ईरितः ।। १९

वेदाक्षरो द्वितीयस्तु तृतीयोऽष्टाक्षरःस्मृतः ।।
इंद्रियेत्येकमंत्रःस्याच्चितिरुपेति च त्रयम् ।। २०

पूर्ववच्चततो मंत्रोद्वौ मुनेर्वाक्यमेवच ।।
सप्तदशाथ मंत्राःस्युर्मुनिवाक्यं त्रयोऽणवः ।। २१

दूतवाक्यं नवश्लोकामुनेर्वाक्यं सकृन्मनुः ।।
देवोवाक्यं वेदमंत्रा दूतवाक्यं ततःपरम् ।। २२

चत्वारस्तु पुनःश्लोका देवीवाक्यं मनुद्वयं ।।
अथ षष्ठे मुनेर्वाक्यं चत्वारःश्लोकमंत्रकाः ।। २३

सप्तमेऽथ मुनेर्वाक्यं त्रयोविंशति मंत्रकाः ।।
मुनिवाक्यं च मंत्रौद्वौ भवेतामष्टमे ततः ।। २४

मुनिवाक्यं त्रिषष्ठ्यात्माहुतयोऽर्धाहुतिस्तथा ।।
नवमे राजवाक्यं तु श्लोकद्वयमतःपरम् ।। २५

मुनिवाक्यं ततः सप्तत्रिंशतश्लोकास्तु मंत्रकाः ।।
दशमे मुनिवाक्यं तु मंत्रद्वयमतःपरम् ।। २६

देवौवाक्यं च मंत्रौद्वौ पुनर्देव्येकमंत्रकः ।।
मुनिवाक्यं ततो द्वाविंशत्याहुतय ईरिताः।। २७

अर्धमंत्रोऽन्तिमः प्रोक्तस्तत एकादशे पुनः ।।
मुनिवाक्यं चतुस्त्रिंशत्श्लोकदेवीवचस्ततः ।। २८

एकमंत्रस्ततो देवाऊचुरित्येषमंत्रकः ।।
एकोमंत्रऽम्बिकावाक्यं चतुर्दशतथाणवः ।। २९

अर्धमंत्रोऽन्तिमः प्रोक्तो द्वादशेऽथाम्बिकावचः ।।

अष्टाविंशतिमंत्राःस्युरेकाप्यर्धान्हुतिस्तथा ।। ३०

पुनर्ऋषिस्ततोऽर्धंस्यान्नवश्लोकास्त्रयोदशे ।।

एकादर्धाबहुतयो द्वादशश्लोकमंत्रकाः ।। ३१

उवाचवचनैःषड्भिरेकोनत्रिंशदीरिताः ।।

गौडपादीयभाष्याब्धेः कारिकामृतमुधृतम् ।।

पिबंतु विबुधाः सर्वे मृतिनाशो यतो भवेत् ।। ३२

।। इति गौडपादीयकारिकावलिः संमाप्ता ।।

# बीजमन्त्रात्मक सप्तशती

## ।। नवार्णमंत्राक्षर ध्यानम् ।।

'वाग्' बीजं हि दीपसमान दीप्तम् ।
'माया'ऽतितेजो द्वितीयार्क बिम्बम् ।।
'कामं' च वैश्वानरतुल्यरूपम् । प्रतीयमानं तु सुखाय चिन्त्यम् ।।
'चा' शुद्धजाम्बूनदतुल्य कान्तिम्। 'मुं' पञ्चमं रक्ततरं प्रकल्पम् ।।
'डा' षष्ठमुग्रार्तिहरे सुनीलम्। 'यै' सप्तमं कृष्णतरं रिपुघ्नम्। ।
'वि' पाण्डुरं चाष्टममादि सिद्धिम्। 'च्चे' धूम्रवर्णं नवमं विशालम् ।।
एतानि बीजानि नवात्मकस्य। जपात् प्रदध्युः सकलार्थ सिद्धिम् ।।

नवार्णमंत्रः– 'ऐं ह्रीं क्लीं चामुण्डायै विच्चे।'

बीजाक्षर गायत्री अंगन्यासः बीजाक्षरायै अंगुष्ठाभ्यां नमः (हृदयाय नमः)। विद्महे तर्जनीभ्यां नमः(शिरसे स्वाहा)। तत्प्रधानायै मध्यमाभ्यां नमः(शिखायै वषट्) । धीमहि अनामिकाभ्यां नमः(कवचाय हुं)। तन्नः शक्तिः कनिष्ठिकाभ्यां नमः(नेत्रत्रयाय वौषट् ) । प्रचोदयात् करतलकरपृष्ठाभ्यां नमः(अस्त्राय फट् )।

बीजगायत्री– 'बीजाक्षरायै विद्महे तत् प्रधानायै धीमहि तन्नः शक्तिः प्रचोदयात्।'

## ।।बीजमंत्रात्मक दुर्गासप्तशती।।

विनियोगः- ॐ अस्य श्रीचण्डीसप्तशत्याः प्रथममध्यमोत्तर चरित्राणां ब्रह्मविष्णुरुद्रा ऋषयः। गायत्र्युष्णिगनुष्टुभश्छन्दांसि। श्रीमहाकाली महालक्ष्मी महासरस्वत्यो देवताः। ऐं ह्रीं क्लीं बीजानि। नन्दाशाकम्भरी भीमाः शक्तयः। अग्निर्वायुसूर्याःतत्त्वानि। ऋग्यजुःसामवेदाःध्यानानि। सकलकामना सिद्धये श्रीमहाकाली महालक्ष्मी महासरस्वती देवता प्रीत्यर्थे जपे विनियोगः।।

ऋष्यादिन्यासः- ब्रह्मविष्णुरुद्र ऋषिभ्यो नमः मुखे। श्रीमहाकाली महालक्ष्मी महासरस्वती देवताभ्यो नमः हृदि। ऐं ह्रीं क्लीं बीजेभ्यो

नमः गुह्ये। नन्दाशाकम्भरी भीमा शक्तिभ्यो नमः पादयोः।
अग्निर्वायु सूर्य तत्त्वेभ्यो नमः नाभौ। ऋग्यजुस्सामवेद ध्यानेभ्यो नमः
हृदि। सकलकामना सिद्धये श्रीमहाकाली महालक्ष्मी महासरस्वती
देवता प्रीत्यर्थे जपे विनियोगाय नमः सर्वांगे।

अंगन्यासः- स्लूं अंगुष्ठाभ्यां नमः(हृदयाय नमः)।
फ्रें तर्जनीभ्यां नमः(शिरसे स्वाहा)।
क्रीं मध्यमाभ्यां नमः(शिखायै वषट्)। म्लूं अनामिकाभ्यां नमः
(कवचाय हुं)। घ्रें कनिष्ठिकाभ्यां नमः(नेत्रत्रयाय वौषट्)।
श्रूं करतलकरपृष्ठाभ्यां नमः(अस्त्राय फट्)।

## ।।ध्यान मंत्र।।

या चण्डी मधुकैटभादि दैत्यदलनी या महिषोन्मूलिनी,
या धूम्रेक्षणचण्डमुण्ड मथनी या रक्तबीजाशिनी।
शक्तिः शुम्भनिशुम्भदैत्यदलनी या सिद्धिलक्ष्मीःपरा,
सा दुर्गा नवकोटि मूर्तिसहिता मां पातु विश्वेश्वरी।।

## ।।प्रथम चरित्रा।।

### ।।प्रथमोऽध्यायः।।

विनियोगः- ॐ अस्यश्रीप्रथमचरितस्य ब्रह्मा ऋषिः।
गायत्री छन्दः। श्रीमहाकालीर्देवता। ऐं बीजं, नन्दा शक्तिः।

अग्निः तत्त्वम्। ऋग्वेदः ध्यानं। धर्मार्थे श्रीमहाकाली देवता
प्रीत्यर्थे जपे विनियोगः।

ऋष्यादिन्यासः- ब्रह्मा ऋषये नमः शिरसि। गायत्रीछन्दसे नमः मुखे।
श्रीमहाकाली देवतायै नमः हृदि। ऐं बीजाय नमः गुह्ये।
नन्दा शक्त्यै नमः पादयोः। अग्नि तत्त्वाय नमः नाभौ।
ऋग्वेद ध्यानाय नमः हृदि। धर्मार्थे श्रीमहाकाली प्रीत्यर्थे जपे
विनियोगाय नमः सर्वांगे।

अंगन्यासः- ऐं अंगुष्ठाभ्यां नमः(हृदयाय नमः)।
ऐं तर्जनीभ्यां नमः(शिरसे स्वाहा)।

ऐं मध्यमाभ्यां नमः(शिखायै वषट्) ।
ऐं अनामिकाभ्यां नमः(कवचाय हुं)।
ऐं कनिष्ठिकाभ्यां नमः(नेत्रत्रयाय वौषट्) ।
ऐं करतलकरपृष्ठाभ्यां नमः(अस्त्राय फट्) ।

## ।।ध्यानम्।।

खड्गं चक्रगदेषुचाप परिघाञ्छूलं भुशुण्डीं शिरः,
शंखं संदधतीं करैस्त्रिनयनां सर्वांगभूषावृताम्।
नीलाश्मद्युतिमास्य पाददशकां सेवे महाकालिकाम्
यामस्तौत्स्वपिते हरौ कमलजो हन्तुं मधुं कैटभम्। ।

## ।।स्तोत्रं।।

ॐ ऐं श्रीं, ह्रीं, क्लीं, श्रीं, प्रीं, ह्रां, ह्रीं, सौं, प्रें, म्रीं, ह्ल्रीं, म्लीं, स्त्रीं,
क्रां, ह्स्लीं, क्रीं, चां, भें, क्रीं, वैं, ह्रौं, युं, जुं, हं, शं, रों, यं, विं, वैं,
चें, ह्रीं, क्रूं, सं, कं, श्रां, त्रों, स्त्रां, ज्यैं, रौं, द्रां, द्रों, ह्रां, द्रूं, शां, म्रीं,
श्रौं, जुं, ह्ल्रूं, श्रूं, प्रीं, रं, वं, व्रीं, ब्लूं, स्त्रौं, ब्लां, लूं, सां, रौं, ह्सौं,
क्रूं, शौं, श्रौं, वं, त्रूं, क्रौं, क्लूं, क्लीं, श्रीं, ब्लूं, ठां, ठ्रीं, स्त्रां, स्लूं, क्रैं,
च्रां, फ्रां, ज्रीं, लूं, स्लूं, नों, स्त्रीं, प्रूं, स्रूं, ज्रां, वौं, ओं, श्रौं, ऋं, रूं,
क्लीं, दुं, ह्रीं, गूं, लां, ह्रां, गूं, ऐं, श्रौं, जूं, डें, श्रौं, छ्रां, क्लीं, ऐं, ॐ।
ॐ नमश्चण्डिकायै प्रथमः ॐ तत्सत् ।।

## ||मध्यम चरित्रं||

## ||द्वितीयोऽध्यायः||

विनियोगः- ॐ अस्य श्रीमध्यमचरित्रस्य विष्णु ऋषिः। उष्णिक् छन्दः। श्रीमहालक्ष्मीर्देवता। ह्रीं बीजम्। शाकम्भरी शक्तिः। वायुः तत्त्वम्। यजुर्वेदः ध्यानं। अर्थार्थे श्रीमहालक्ष्मी देवता प्रीत्यर्थे जपे विनियोगः।

ऋष्यादिन्यासः- विष्णु ऋषये नमः शिरसि। उष्णिक् छन्दसे नमः मुखे। श्रीमहालक्ष्मी देवतायै नमः हृदि। ह्रीं बीजाय नमः गुह्ये।

शाकम्भरी शक्त्यै नमः पादयोः। वायु तत्त्वाय नमः नाभौ।
यजुर्वेद ध्यानाय नमः हृदि।
अर्थार्थे श्रीमहालक्ष्मी प्रीत्यर्थे जपे विनियोगाय नमः सर्वांगे।

अंगन्यासः- ह्लां अंगुष्ठाभ्यां नमः(हृदयाय नमः)। ह्लीं तर्जनीभ्यां नमः(शिरसे स्वाहा)। ह्लूं मध्यमाभ्यां नमः (शिखायै वषट्)। ह्लैं अनामिकाभ्यां नमः(कवचाय हुं)। ह्लौं कनिष्ठिकाभ्यां नमः(नेत्रत्रयाय वौषट्)।
ह्लः करतलकरपृष्ठाभ्यां नमः(अस्त्राय फट्)।

## ।।ध्यानम्।।

अक्षस्त्रक्परशुं गदेषु कुलिशं पद्मं धनुष्कुण्डिकाम्।
दण्डं शक्तिमसिं च चर्म जलजं घण्टां सुराभाजनम् ।।
शूलं पाशसुदर्शने च दधतीं हस्तैः प्रवालप्रभां
सेवे सैरिभिमर्दिनीमिह महालक्ष्मीं सरोजस्थिताम् ।।

## ।।स्तोत्रं।।

ॐ ह्रीं, श्रौं, श्रीं, ह्सूं, हौं, ह्रीं, अं, क्लीं, चां, मुं, डां, यैं, विं, च्चें,
ईं, सौं, व्रां, त्रौं, लूं, वं, वं, ह्रां, क्रीं, सौं, यं, ऐं, मूं, सः, हं, सों,
शं, हं, ह्रौं, म्लीं, यूं, त्रूं, स्त्रीं, आं, प्रें, शं, ह्रां, स्मूं, ऊं, गूं, व्र्यूं, ह्रं,

भैं, ह्रां, क्रूं, मूं, ल्हीं, श्रां, द्रूं, द्व्रूं, हसौं, क्रां, स्हौं, म्लूं, श्रीं, गैं, क्रूं,
त्रीं, क्स्त्रीं, कं, फ्रों, ह्रीं, शां, क्ष्म्रीं, रों, डुं,।
ॐ नमश्चण्डिकायै द्वितीयः। ॐ तत्सत् ।।

## ।।तृतीयोऽध्यायः।।

### ।।ध्यानम् ।।

उद्यद्भानुसहस्र कान्तिमरुणक्षौमां शिरो मालिकां,
रक्तालिप्त पयोधरां जपवटीं विद्यामभीतिं वरम् ।।
हस्ताब्जैर्दधतीं त्रिनेत्रविलसद् वक्त्रारविन्दश्रियम् ,
देवीं बद्ध हिमांशुरत्नमुकुटां वन्देऽरविन्द स्थिताम् ।।

## ।।स्तोत्रं।।

श्रौं, क्लीं, सां, त्रों, प्रूं, ग्लौं, क्रौं, व्रीं, स्लीं, ह्रीं, ह्रौं, श्रां, ग्रीं, क्रूं, क्रीं, यां, द्लूं, द्रूं, क्षं, ओं, क्रौं, क्ष्म्क्ल्रीं, वां, श्रूं, ग्लूं, ल्रीं, प्रें, हूं, हौं, दें, नूं, आं, फ्रां, प्रीं, दं, फ्रीं, ह्रीं, गूं, श्रौं, सां, श्रीं, जुं, हं, सं,। ॐ नमश्चण्डिकायै तृतीयः। ॐ तत्सत् ।।

## ।।चतुर्थोऽध्यायः।।

### ।।ध्यानम्।।

कालाभ्राभां कटाक्षैररिकुलभयदां मौलिबद्धेन्दुरेखां,
शंखं चक्रं कृपाणं त्रिशिखमपि करैरुद्वहन्तीं त्रिनेत्राम्।

सिंहस्कंधाधिरूढ़ां त्रिभुवनमखिलं तेजसा पूरयन्तीं,
ध्यायेद् दुर्गां जयाख्यां त्रिदशपरिवृतां सेवितां सिद्धिकामैः ।।

||स्तोत्रं||

श्रौं, सौं, दीं, प्रें, यां, रूं, भं, सूं, श्रां, औं, लूं, डूं, जूं, धूं, त्रें, ह्लीं,
श्रीं, ईं, ह्रां, ह्ल्रूं, क्लूं, क्रां, ल्लूं, फ्रें, क्रीं, म्लूं, घ्रें, श्रौं, ह्रौं, व्रीं, ह्रीं,
त्रौं, ह्लौं, गीं, यूं, ह्लीं, ह्लूं, श्रौं, औं, अं, म्हौं, प्रीं ।
ह्रीं ॐ नमश्चण्डिकायै चतुर्थः । ॐ तत्सत् ।।

## ।।उत्तर चरित्रं।।

### ।।पञ्चमोऽध्यायः।।

विनियोगः- ॐ अस्य श्रीउत्तमचरितस्य रुद्र ऋषिः। अनुष्टुप् छन्दः। श्रीमहासरस्वतीर्देवता। क्लीं बीजं। भीमा शक्तिः। सूर्यः तत्त्वम्। सामवेदः ध्यानं। कामार्थे श्रीमहासरस्वती देवता प्रीत्यर्थे जपे विनियोगः।

ऋष्यादिन्यासः- रुद्र ऋषये नमः शिरसि। अनुष्टुप्छन्दसे नमः मुखे। श्रीमहासरस्वतीर्देवतायै नमः हृदि। क्लीं बीजाय नमः गुह्ये। भीमा शक्त्यै नमः पादयोः। सूर्य तत्त्वाय नमः नाभौ। सामवेद ध्यानाय नमः

हृदि। कामार्थ्यै श्रीमहासरस्वतीर्देवता

प्रीत्यर्थे जपे विनियोगाय नमः सर्वांगे।

अंगन्यासः- क्लां अंगुष्ठाभ्यां नमः(हृदयाय नमः)।

क्लीं तर्जनीभ्यां नमः(शिरसे स्वाहा)।

क्लूं मध्यमाभ्यां नमः(शिखायै वषट्) ।

क्लैं अनामिकाभ्यां नमः(कवचाय हुं)।

क्लौं कनिष्ठिकाभ्यां नमः(नेत्रत्रयाय वौषट्) ।

क्लः करतलकरपृष्ठाभ्यां नमः(अस्त्राय फट्) ।

## ||ध्यानम्| |

घण्टाशूल हलानि शंख मुसले चक्रं धनुः सायकम,
हस्ताब्जैर्दधतीं घनान्तविलसच्छीतांशु तुल्यप्रभाम्|
गौरीदेह समुद्भवां त्रिजगतामाधारभूतां
महापूर्वामत्र सरस्वतीमनु भजे शुम्भादि दैत्यार्दिनीम्| |

## ||स्तोत्रं||

ॐ क्लीं, श्रौं, प्रीं, ओं, ह्रीं, ल्रीं, त्रों, क्रीं, ह्सौं, ह्रीं, श्रीं, हूं, क्लीं,
रौं, स्त्रीं, म्लीं, प्लूं, स्हौं, स्त्रीं, ग्लूं, व्रीं, सौं, लूं, ल्लूं, द्रां, क्सां, क्ष्म्रीं,

ग्लौं, स्कं, त्रूं, स्क्लूं, क्रौं, च्छ्रीं, म्लूं, क्लूं, शां, ह्लीं, स्त्रूं, ल्लीं, लीं, सं, लूं, ह्सूं, श्रूं, जूं, ह्स्ल्रीं, स्कीं, क्लां, श्रूं, हं, ह्लीं, क्स्रूं, द्रौं, क्लूं, गां, सं, ल्स्रां, फ्रीं, स्लां, ल्लूं, फ्रें, ओं, स्म्लीं, ह्रां, ऊं, ह्लूं, हूं, नं, स्त्रां, वं, मं, म्क्लीं, शां, लं, भैं, ल्लूं, हौं, ईं, चें, क्ल्रीं, ह्ल्रीं, क्ष्म्ल्रीं, पूं, श्रौं, ह्रौं, भ्रूं, क्स्त्रीं, आं, क्रूं, त्रूं, डूं, जां, ह्ल्रूं, फ्रौं, क्रौं, किं, ग्लूं, छ्क्लीं, रं, क्सैं, स्हुं, श्रौं, श्रीं, ओं, लूं, ह्लूं, ल्लूं, स्क्रीं, स्त्रौं, स्भ्रूं, क्ष्म्क्लीं, व्रीं, सीं, भूं, लां, श्रौं, स्हैं, ह्रीं, श्रीं, फ्रें, रूं, च्छ्रूं, ह्लूं, कं, द्रें, श्रीं, सां, ह्रीं, ऐं, स्कीं। ॐ नमश्चण्डिकायै पंचमः।

ॐ तत्सत् ।।

## ।। षष्ठमोध्यायः ।।

### ।।ध्यानम्।।

नागाधीश्वर विष्टरां फणिफणोत्तंसोरु रत्नावलीं,
भास्वद्देहलतां दिवाकरनिभां नेत्रत्रयोद्भासिताम्।
मालाकुम्भकपाल नीरजकरां चन्द्रार्धचूडां परां,
सर्वज्ञेश्वर भैरवांक निलयां पद्मावतीं चिन्तये।।

### ।।स्तोत्रं।।

श्रौं, ओं, त्रूं, ह्रौं, क्रौं, श्रौं, त्रीं, क्लीं, प्रीं, ह्रीं, ह्रौं, श्रौं, ऐं, ओं, श्रीं, क्रां, हूं, छ्रां, क्ष्म्क्ल्रीं, ल्लूं, सौं, ह्लौं, क्रूं, सौं। ॐ नमश्चण्डिकायै षष्ठः ॐ तत्सत् ।।

## ।।सप्तमोऽध्यायः।।

### ।।ध्यानम्।।

ध्यायेयं रत्नपीठे शुककल पठितं शृण्वतीं श्यामलाङ्गीं
न्यस्तैकाङ्घ्रि सरोजे शशिशकलधरां वल्लकीं वादयन्तीम्।
कह्लाराबद्धमालां नियमित विलसच्चोलिकां रक्तवस्त्रां,
मातङ्गीं शंखपात्रां मधुरमधुमदां चित्रकोद्भासि भालाम् ।।

### ।।स्तोत्रं।।

श्रौं, कुं, ह्लीं, ह्रूं, मूं, त्रौं, ह्रौं, ओं, ह्सूं, क्लूं, क्रें, नें, लूं, ह्स्लीं,
प्लूं, शां, स्लूं, प्लीं, प्रें, अं, औं, म्ल्रीं, श्रां, सौं, श्रौं, प्रीं, हस्व्रीं।
ॐ नमश्चण्डिकायै सप्तमः । ॐ तत्सत् ।।

## ||अष्टमोऽध्यायः||

### ||ध्यानम् ||

अरुणां करुणातरङ्गिताक्षीं धृतपाशांकुश पुष्पबाण चापाम् ।
अणिमादिभिरावृतां मयूखैरहमित्येव विभावये भवानीम्।।

### ||स्तोत्रं||

श्रौं, म्ह्ल्रीं, प्रूं, एं, क्रों, ईं, एं, ल्रीं, फ्रों, म्लूं, नों, हूं, फ्रौं, ग्लौं,
स्मौं, सौं, श्रीं, स्हौं, ख्सें, क्ष्म्लीं, ह्रौं, वीं, लूं, ल्सीं, ब्लीं, त्स्रों, ब्रूं,
श्क्लीं, श्रूं, ह्रीं, शीं, क्लीं, क्लौं, फ्रूं, ह्रूं, क्लूं, तां, म्लूं, हं, स्लूं, औं,

ह्लौं, श्लरीं, यां, क्ष्लीं, ह्लीं, ग्लौं, ह्रौं, प्रां, क्रीं, क्लीं, न्स्लुं, ह्रीं,
ह्लौं, ह्रैं, भ्रं, सौं, श्रीं, प्सूं, द्रौं, स्त्रां ह्स्लीं, स्ल्लरीं ।
ॐ नमश्चण्डिकायै अष्टमः । ॐ तत्सत् ।।

## ।।नवमोऽध्यायः।।

### ।।ध्यानम्।।

बन्धूक काञ्चननिभं रुचिराक्षमालां
पाशांकुशौ च वरदां निजबाहुदण्डैः।
बिभ्राणामिन्दु शकलाभरणं
त्रिनेत्रमर्धाम्बिकेशमनिशं वपुराश्रयामि।।

## ॥स्तोत्रं॥

रौं, क्लीं, म्लौं, श्रौं, ग्लीं, ह्रौं, ह्सौं, ईं, ब्रूं, श्रां, लूं, आं, श्रीं, क्रौं, प्रूं, क्लीं, भ्रूं, ह्रौं, क्रीं, म्लीं, ग्लौं, ह्सूं, प्लीं, ह्रौं, ह्स्रां, स्हौं, ल्लूं, क्स्लीं, श्रीं, स्तूं, च्रूं, वीं, क्ष्लूं, श्लूं, क्रूं, क्रां, ह्रौं, क्रां, स्क्ष्लीं, म्रूं, फ्रूं।

ॐ नमश्चण्डिकायै नवमः । ॐ तत्सत् ।

## ।।दशमोऽध्यायः।।

### ॥ ध्यानम् ॥

उत्तप्तहेमरुचिरां रविचन्द्रवह्निनेत्रां
धनुश्शरयुतांकुश पाशशूलम्।

रम्यैर्भुजैश्च दधतीं शिवशक्तिरूपां

कामेश्वरीं हृदि भजामि धृतेन्दुलेखाम् ।।

॥ स्तोत्रं ॥

श्रौं, ह्रीं, ब्लूं, ह्रीं, म्लूं, श्रौं, ह्रीं, ग्लौं, श्रौं, धूं, हूं, द्रौं,
श्रीं, त्रूं, ब्रूं, फ्रें, ह्रां, जुं, सौः, स्लूं, प्रें, ह्स्वां, प्रीं, फ्रां,
क्रीं, श्रीं, क्रां, सः, क्लीं, व्रें, इं, ज्स्हल्रीं ।।

ॐ नमश्चण्डिकायै दशमः । ॐ तत्सत् ।।

## ।। एकादशोऽध्यायः ।।

### ।।ध्यानम् ।।

बालरविद्युतिमिन्दु किरीटां
 तुङ्गकुचां नयनत्रय युक्ताम्।
स्मेरमुखीं वरदांऽकुशपाशाभीतिकरां
 प्रभजे भुवनेशीम् ।।

श्रौं, क्रूं, श्रीं, ह्लीं, प्रें, सौः, स्हौं, श्रूं, क्लीं, स्क्लीं, प्रीं, ग्लौं, ह्स्ह्रीं,
स्तौं, लीं, म्लीं, स्तूं, ज्स्ह्रीं, फ्रूं, क्रूं, ह्रीं, लूं, क्ष्म्रीं, श्रूं, इं, जुं, त्रैं, द्रूं,
ह्रौं, क्लीं, सूं, हौं, श्व्रं, ब्रूं, स्फ्रूं, ह्रीं, लं, ह्सौं, सें, ह्रीं, ह्रीं, विं, प्लीं,

क्ष्म्क्लीं, त्स्त्रां, प्रं, म्लीं, स्त्रूं, क्ष्मां, स्तूं, स्ह्रीं, थ्प्रीं, क्रौं, श्रां, म्लीं ।

ॐ नमश्चण्डिकायै एकादशः। ॐ तत्सत् ।।

## ।।द्वादशोऽध्यायः।।

### ।।ध्यानम्।।

विद्युद्दाम समप्रभां मृगपति स्कन्धस्थितां भीषणां,
  कन्याभिः करवालखेटविलसद्धस्ताभिरासेविताम्।
हस्तैश्चक्रगदासि खेटविशिखांश्चापं गुणं तर्जनीम्,
  बिभ्राणामनलात्मिकां शशिधरां दुर्गां त्रिनेत्रां भजे।।

## ।।स्तोत्रं।।

ह्रीं, ओं, श्रीं, ईं, क्लीं, क्रूं, श्रूं, प्रां, क्रूं, दिं, फ्रें, हं, सः, चें, सूं, प्रीं, ब्लूं, आं, औं, ह्रीं, क्रीं, द्रां, श्रीं, स्लीं, क्लीं, स्लूं, ह्रीं, ब्लीं, त्रों, ओं, श्रौं, ऐं, प्रें, द्रूं, क्लूं, औं, सूं, चें, ह्रूं, प्लीं, क्षां।

ॐ नमश्चण्डिकायै द्वादशः । ॐ तत्सत् ।।

## ।।त्रयोदशोऽध्यायः।।

### ।।ध्यानम्।।

बालार्क मण्डलाभासां चतुर्बाहुं त्रिलोचनम्।
पाशांकुशवराभीतिर्धारयन्तीं शिवां भजे।।

## ।।स्तोत्रं।।

श्रौं, व्रीं, ओं, औं, ह्रां, श्रीं, श्रां, ओं, प्लीं, सौं, ह्रीं, क्रीं, ह्लूं,
क्लीं, ह्रीं, प्लीं, श्रीं, ह्लीं, श्रूं, ह्रीं, त्रूं, हूं, ह्रां,
प्रीं, ऊं, सूं, ह्लौं, षौं, आं, ॐ, क्लीं, ॐ।
ॐ नमश्चण्डिकायै त्रयोदशः। ॐ तत्सत् ।।

पुनः नवार्णमंत्र एवं बीजगायत्री १०८ वार जपित्वा समर्पयेत् ।

